अध्यात्मग्रन्थावलिः

# वेदान्तबालबोधिनी

## श्रीभगवत्पादाचार्यकृतप्रातःस्मरणस्तोत्रव्याख्या

व्याख्याननिर्मातारः
श्रीसच्चिदानन्देन्द्रसरस्वतीसंयमिनः

ತ್ಯಾಗರಾಜನಗರ,
560 028,

क्रमाङ्कः ११

प्रकाशनस्थानम् :
अध्यात्मप्रकाशकार्यालयः,
होळेनरसीपुरम्

## PUBLISHERS' NOTE

The booklet now published contains an original commentary on the "*Pratahsmarana Stotra*" or Morning Meditation Hymn by Sri Bhagavatpada, generally identified with the famous Shankaracharya.

While we have no satisfactory means of ascertaining whether or not the hymn is really the production of the well-known writer of the celebrated commentaries on the Classical Upanishads, the Bhagavadgita and the Vedanta Sutras, the style and subject-matter of the work incline us to believe in its genuineness.

The main object of the hymn is to commend, to aspirants after the Highest Goal of Human Life, the meditation of the Supreme Reality underlying the Universe as their very Self.

The Commentator Sri Satchidananda Saraswati Swamiji has, in his own imimitable style, developed the theme in a thought-arresting manner, and shows how the hymn really condenses the most essential doctrines of the Advaita Vedanta in three short verses. His presentation

of the subject in the form of a dialogue between master and pupil, rouses and sustains the interest of the curious reader till he comes to the very end of the book.

We hope that the reading of this brochure, will prove an earnest attempt to students of Vedanta to study the larger works of the Swamiji such as the *Sugama* and the *Mandukya Rahasya Vivriti.*

We have been asked to convey Sri Swamiji's Narayana Smaranams to the following Pandits who have helped the author by offering useful suggestions: Pandit Pravara *Sri Kodur Krishna Jois*, Asthana Vidwan of Sringeri Peetha; Pandita Pravara *H. Ananta Murty Sastri*, Tarka Professor, Sanskrit College, Bangalore; Vedanta Siromani *S. Vittala Sastry*, Astana Vidwan, Mysore Palace and Vedanta Siromani *Parakkaje Subramanya Bhatta*.

# वाचकेषु विज्ञप्तिः



यद्यपि वेदान्तप्रकरणानि सन्त्येव परः शतं गीर्वाणवाणीमयानि, तथापि श्रीशङ्करभगवत्पादसंमतविशुद्धवेदान्तप्रक्रियासारसंग्रहात्मकानि विरलान्येवेति वाच्यम्। वेदान्तार्थसारसंग्रहभूतेऽस्मिन्नत्यल्पाकारेऽपि प्रकरणे (१) आत्मनः सच्चिदानन्दपरब्रह्मरूपत्वम्, (२) स्वयंज्योतीरूपब्रह्मत्वम्, (३) सर्वात्मत्वं चेत्येतदुपदेशरत्नत्रयं महार्घम् अवस्थात्रयपरीक्षाप्रक्रिया, सर्वसाक्ष्युपक्षेपप्रक्रिया, अध्यासप्रक्रिया चेत्यौपनिषद्विद्वत्संप्रतिपन्नप्रक्रियात्रितयावलम्बनेन सुरक्षितमस्तीति स्वानुगुणव्याख्यया समुद्घाटितेयं प्रकरणपेटिका सामान्यबुद्धीनामप्यधिकारिणां मुमुक्षूणां मतौ रत्नत्रयमिदं प्रख्यापयेदिति मन्वानेन मया बहुवर्षेभ्यः प्रागेव कर्णाटकभाषायां स्वोपज्ञबालबोधिन्याख्यव्याख्या समलङ्कृतं समग्रं ग्रन्थमिदानीं कैश्चिद्गुणलुब्धैः प्रेरितोऽहं निखिलभारतवासिनां वेदान्तजिज्ञासूनामुपकाराय देववाण्यैव परिष्कृत्य प्राकाश्यं नीतवानस्मि ॥

अनुभवावसानत्वाद्वेदान्तशास्त्रविचारस्य सद्गुरूपदेशश्रवणशास्त्रार्थविचारस्वात्मानुभवरूपाणां तिसृणामपि प्रतिपत्तीनां संगानादेव वेदान्तार्थसाक्षात्कृतिः प्रसीदेदिति वदन्त्यभियुक्ताः। तामेतामभियुक्तोक्तिमनुरुन्धानेनैव मया प्रकरणेऽस्मिन् तत्र तत्र प्रधानविषयान् निःसन्दिग्धमाविष्कुर्वती भगवती श्रुतिरुदाहृता। ब्रह्मविद्याया अनुभवावसानत्वं पदे पदे स्मारयन्तीनां भाष्यकारोक्तीनामेव सरणिरनुसृता विषयप्रतिपादने अनादृत्य तर्कमात्रशरणानां नवीनप्रक्रियाः। लोकदृष्टिवासनया तत्र तत्र संभाव्यमानानां जिज्ञासुजनशङ्काविशेषाणां परिहाराय शास्त्रदृष्टिरेव सर्वजनीनानुभवानुसारिणी शरणीकर्तव्येत्यवधारणार्थमेव च गुरुशिष्यसंवादवेषत्वमारचितं प्रकरणस्य। तदत्र यथोपवर्णितप्रतिपत्तित्रयसंगाने प्रयतमानानां कियत् साहाय्यकं स्यादेतत्प्रकरणव्याख्यानाध्ययनेनेत्यत्र तु विद्वज्जनैरेव परीक्षानिकषायितव्यम् ॥

तदिदममोघं प्रकरणं श्रीमद्भगवत्पादाचार्यकृतमिति प्रथामनुभवति । यद्यपि तदभिख्यया जगत्प्रसिद्धानां प्रातःस्मरणीयानां श्रीशङ्करभगवत्पादाचार्याणामेवेयं कृतिः, अहोस्विन्नेति निश्चेतुं पर्याप्तप्रमाणानि न सन्ति ग्रन्थपुरातत्त्वशोधकसंमतानि, तथापि प्रसन्नगम्भीरार्थतया तैरेवारचितमिदमिति विश्वासमापादयन्तीं तत्त्वार्थप्रतिपादनशैलीं बिभर्ति प्रकरणमित्यत्र तु न काचित्संशीतिः। तस्यास्य सव्याख्यानं प्रकाशनेऽवकाशमनुगृहीतवन्तं पुरुषोत्तमं नारायणं भगवन्तमनुदिनं भक्त्या नमस्ये इति ॥

विळम्बिसंवत्सरे
माघ कृ॥ द्वितीयायाम्

श्रीशङ्करचरणस्मरणावलम्बी
सच्चिदानन्देन्द्रसरस्वती भिक्षुः

# विषयानुक्रमणिका

( अत्रत्याः संख्या ग्रन्थखण्डसूचिकाः )

पत्रपृष्ठम्

# सङ्केताक्षरविवरणम्

| | |
|---|---|
| ऋ. | ऋग्वेदसंहितायाम् |
| के. | केनोपनिषदि |
| गी. | भगवद्गीतासु |
| छा. | छान्दोग्योपनिषदि |
| तै. | तैत्तिरीयोपनिषदि |
| तै. ना. | तैत्तिरीये नारायणानुवाके |
| बृ. | बृहदारण्यकोपनिषदि |
| मां. | माण्डूक्योपनिषदि |
| मु. | मुण्डकोपनिषदि |
| श्वे. | श्वेताश्वतरोपनिषदि |

# अशुद्धिशोधनम्

| पार्श्वे | पङ्क्तौ | स्थाने | पठनीयम् |
|---|---|---|---|
| ३१ | उपान्त्यायाम् | त हि | ते हि |
| ३८ | अन्त्यायाम् | खण्डसंख्या ७४ | ७५ |
| ४० | ३ | दा कदा यवा | यदा कदा वा |
| ४२ | ८ | भवेत् ? | भवेत् । |

॥ ॐ ॥

# वेदान्तबालबोधिनी

## (प्रातःस्मरणस्तोत्रव्याख्या)



अवस्थात्रयसाक्षी यो मनोवाचामगोचरः ।
नेतिनेत्यागमादिष्टो ह्यात्माऽद्वैतो गतिर्मम ॥

## ग्रन्थावतरणिका

इह खलु सर्व एव जनाः प्रातः सुप्तेरुत्थितमात्रा एव बाह्यविषयव्यवहारानुसंधानपरा भवन्ति निसर्गतः। रात्रौ पुनः सुप्तिप्राप्तिपर्यन्तं च सर्वदा दारापत्यक्षेत्रगृहवित्तादिचिन्तानिमग्ना देहादिषु प्रतिदिनमुत्तरोत्तरं परिवर्धमानेनाहंममाभिमानेन संदूषितान्तःकरणा विषयचिन्तनकथनादिनैव व्यर्थं कालं नयन्तः परमपुरुषार्थदायिनि स्वात्मतत्त्वज्ञानलाभे स्वल्पमप्यवकाशमलभमाना भूयो भूयः सुखदुःखजननमरणप्रबन्धलक्षणसंसारव्यथामनुभवन्तीति तेष्वनुकम्पया आर्द्रहृदयः श्रीभगवत्पादाचार्यः, तादृशसंसारान्मोक्षमाणानां जनानामनुग्रहार्थम् 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः। नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनं हि तत् ॥' (बृ. ४-४-२१), 'अशुभानि निराचष्टे तनोति शुभसन्ततिम् । स्मृतिमात्रेण यत्पुंसां ब्रह्म तन्मङ्गलं परम्' (?) इत्यादिश्रुतिस्मृत्युपदेशं स्मारयन् श्लोकत्रयेणैव ब्रह्मात्मैकत्वबोधकं परमपावनं प्रातःस्मरणस्तोत्रनामकं प्रकरणमारभते। यस्यायमाद्यः श्लोकः –

# १- आत्मा सच्चित्सुखं ब्रह्म

प्रातः स्मरामि हृदि संस्फुरदात्मतत्त्वं
सच्चित्सुखं परमहंसगतिं तुरीयम् ।
यत्स्वप्नजागरसुषुप्तमवैति नित्यं
तद्ब्रह्म निष्कलमहं न च भूतसङ्घः ॥ १ ॥

## संक्षेपतः श्लोकार्थः

यन्नित्यं स्वप्नजागरसुषुप्तम् अवैतीव, अथ च परमार्थत एतदवस्थात्रिकविरहितमेव सत् तदपेक्षया तुरीयं भवति, तत्तादृशं सच्चित्सुखं परमहंसगतिं हृदि संस्फुरदात्मतत्त्वम् अहं प्रातः स्मरामि। तन्निष्कलं ब्रह्मैवाहम्, न तु भूतसङ्घातः – इति यथाश्रुतश्लोकार्थः ॥

अथैतेषां हृदिसंस्फुरत्तादीनां विशेषणानामभिप्रायं प्रश्नोत्तरमालारूपेण व्याख्यास्यामः ॥

## हृदि संस्फुरदात्मतत्त्वम्

१. हृदि संस्फुरदिति कोऽर्थः ?

हृदिति मन उच्यते। तस्मिन् संस्फुरणं नाम तत्र सम्यग्भासमानता ॥

२. ननु सर्वोऽप्यर्थो मनस्येव भासते। तत्राऽऽत्मतत्त्वं मनसि भासत इति को वा विशेषो विवक्षितः स्यात् ?

अत्रायं विशेषः। आत्मेतरे पदार्था मनसो गोचराः सन्तः प्रतिभासन्ते। मनस्तान् गोचरीकृत्य विजानाति। आत्मतत्त्वं पुन-

र्मनस्येव संस्फुरति, न तु मनसो गोचरीभवतीति। अस्यास्तित्वं मनस्येव तु विविक्ततया उपलभ्यत इति कृत्वा हृदि संस्फुरतीत्युच्यते। अत्र दृष्टान्तः। चक्षुर्घटं पश्यतीत्यत्र घटो बहिः स्थितः सन्, चक्षुषो गोचरीभवतीत्यभिप्रायः। चक्षुषि वेदना भवतीत्यत्र तु वेदना चक्षुष्यनुभूयत इत्येतावानभिप्रायः, न पुनर्वेदना चक्षुषो गोचरीभवतीत्यपि। तत्र यः पश्यति स्वज्ञानेन गोचरीकरोति स **विषयी**, यत्तु तज्ज्ञानस्य गोचरीभवति स **विषयः** – इति स्थिते सर्व एव पदार्था मनसो विषया एव भवन्ति। मनश्च तेषां विषयि। न त्वेवमात्मानं गोचरीकरोति मनः। तस्मान्न तस्याऽऽत्मा विषयः, नापि च तत्र मनो विषयि। अन्यत्रानुपलभ्यमानस्त्वात्मा मनस्येवोपलभ्यते इति मनसो विशेषः। तदेतदुक्तं भवति 'हृदि संस्फुरत्' इति॥

३. ननु यद्यात्मा न केनापि विषयीक्रियते, ततस्तस्य नास्तित्वमेवाऽऽपद्यते। कथं तर्हि भवेदस्माकमात्मास्तित्वविज्ञानम्?

नायमस्ति नियमः, यद्विषयिनिमित्तैव सर्वस्यापि वस्तुनः सत्ताप्रतीतिरिति। यस्य हि वस्तुनः स्वयंस्फुरत्ता नास्ति तस्य भवति विषय्यपेक्षा स्फुरणे। यस्य पुनः स्फुरत्ता स्वयंसिद्धा न तस्यान्यापेक्षा। तद्यथा- गृहेऽन्धकारे विद्यमानानां पदार्थानां स्वयंस्फुरत्ता नास्तीति तेषां प्रकाशनाय भवति दीपापेक्षा। दीपस्य पुनः स्वयंस्फुरतः स्वभासैव च सर्वप्रकाशने समर्थस्य नास्ति प्रकाशान्तरापेक्षा। तद्वत्। यस्य हि यो धर्मः स्वभावतो नास्ति तदन्यतस्तमपेक्षत इति युक्तम्। यथा जलादि स्वत औष्ण्यरहितं सत्तद्वस्त्वन्तरादग्न्यादेरपेक्षते। एवं यस्य स्वयंस्फुरणं नास्ति तस्य बाह्यविषयस्य मनःसहकृतचक्षुःश्रोत्रादीन्द्रिय-

रूपकरणसापेक्षा स्फुरणप्रसिद्धिरिति युज्यते। आत्मनस्तु स्वभावत एव स्फुरणं धर्मः, इत्यतः सोऽन्यतः स्फुरणं नापेक्षते। स्वयंसिद्धत्वात् तस्य स्फुरणस्य। तदेतदनुसंधायोक्तं श्लोके 'हृदि संस्फुरत्' इति। मनसि सम्यक्स्फुरत्, स्वयमेव प्रकाशमानम् आत्मतत्त्वम् इति हि विशेषणार्थः ॥

४. अथात्र 'आत्मतत्त्वम्' इति तत्त्वशब्दोपादानेन किं प्रयोजनम् ? आत्मैव खलु हृदि संस्फुरन्नास्ते? तस्य च तत्त्वं किं ततोऽप्यन्यदस्ति येन शब्दाधिक्यादर्थाधिक्यमपि भवेत् ?

बाढम्, आत्मैव हृदि संस्फुरति। स तु किं द्रष्टा श्रोता मन्ता विज्ञाता कर्ता भोक्तेति यथाप्रसिद्ध एव, आहोस्वित् तद्विलक्षण-स्वरूप इति विचारणीयमस्ति। तत्र नायं यथावर्णितस्वभावः, यतो न नित्यं देहेन्द्रियादिसंघातयुक्तः। किं तु सच्चित्सुखात्मकः- इति वेदान्तोक्तरीत्या अवस्थात्रयविचारणादवगम्यते। तदेव तु तस्य तत्त्वमित्यभिप्रायेणोच्यते 'आत्मतत्त्वम्' इति। अतो न दोषः ॥

## यत् स्वप्नजागरसुषुप्तमवैति नित्यम्

५. कथं तु द्रष्टृश्रोतृत्वादिस्वरूपविलक्षणो भवेदात्मा! न हि देहेन्द्रियादि-संघातं परित्यज्य क्षणमपि स्थातुमीष्टे कश्चिदपि पुरुषः। न च संघाते स्थितस्य दृष्टिश्रुतिमत्यादिवियोगः क्वचिद्दृष्टो व्यवहारे। तद्वियोगे व्यवहारस्यैवानुपपत्तेः। कथं वा सच्चित्सुखात्मक इत्यवगम्यत आत्मा? अस्तित्वज्ञानसुखदुःखादयो हि तस्य धर्मा न तु स्वरूपभूता एव। न हि जातुचित्कश्चिदेवं प्रतिपद्यते 'केवलसच्चित्सुखात्मकोऽहम्' इति। एवं तु स्वात्मानं विभावयति सर्वः 'अयमहमस्मि द्रष्टा श्रोता विज्ञानात्मा कर्ता भोक्ता च' इति ॥

सत्यमेवं यदा जागरितपरिच्छिन्नदृष्ट्यैव स्वात्मानमीक्षते । वस्तुतस्तु न जागरितावस्थामात्रपरिच्छिन्नोऽयमात्मा । किं नाम, स्वप्नजागरसुषुप्ताख्यमवस्थात्रयमपि नित्यमवैतीति सर्वजनीनानुभवेन सर्वावस्थाव्यतिरिक्त एव । एवं च, अवस्थात्रयस्यास्य परीक्षणेन यदि जिज्ञासुरात्मस्वरूपं विवेचयेत्, तदा यथोक्तरूपमेव स्वात्मतत्त्वमित्यवधारयेत् इति वेदान्तनिष्णाताः प्रतिजानते ॥

६. कथं वा एतासामवस्थानां परीक्षणं कर्तव्यम् ?

उच्यते । किं नाम जागरणम्? तत्कस्य भवति? किमात्मा सर्वदा भवत्यस्यामवस्थायाम्? को वा स्वभावो जागरिते समुपलभ्यमानानां भावानाम्?—इत्यादि परीक्ष्य निर्धारयितव्यं भवति जागरितविषये । एवं स्वप्नसुषुप्तविषयेऽपि परीक्षणीयं भवति ॥

७. ननु सर्व एव भावाः स्वप्ने मिथ्याप्रतिभासवन्तः । सुषुप्ते तु न भवत्येव कोऽप्यनुभवः । एवं स्थिते स्वप्नसुषुप्तत्त्वे, किमस्ति विचारणीयं तयोर्विषये ? तदेतदवस्थाद्वयमुपेक्ष्य किं जागरितेनैकेनैव नालं विचारितेन ?

नैवम् । न हि किञ्चिदप्यविचार्य श्रद्धातव्यं याथातथ्येन तत्त्वं निर्दिधारयिषुणा । यस्मात्, लोके यदुपलभ्यते आपाततो यद्रूपेण, तद्वस्तुतोऽपि तद्रूपमेवेति परीक्षणमन्तरेण न ह्यध्यवसातुं शक्यते । भ्रान्तेरपि संभवात् । क्वचिद्विद्यमानमिव प्रतीतमपि ह्यविद्यमानमेव भवति परमार्थतः । तद्यथा- दूरे स्थितमिव क्वचित् प्रतीयमानं जलं तृष्णातुरैः पान्थैः समीपं गत्वा परीक्षितं सत्, मरीचिकामात्रमिति निश्चीयते । एवं क्वचिदविद्यमानवस्तुकमिवाऽऽपाततः प्रतीयमानमपि परीक्ष-

णानन्तरं विद्यमानमहाविषयपूर्णमेवेत्यवधार्यते। तद्यथा कश्चित्पुरुषः स्वगृहे इतस्ततः परिदृश्यमानानां निरुपयोगलिखितपत्राणां प्रदाहे प्रवृत्तः पत्राणामेकैकं निरीक्ष्य अग्निसात्कुर्वन् दैवात् तत्तादृशमेकं पत्रमुपलभते यस्मिन् स्वप्रपितामहाय केनचिन्महाराजेन प्रत्तं वंशपारंपर्येणानुभवयोग्यं ग्रामभूम्यादिविवरणसहितं शासनमस्ति। तदेवमविचार्य यस्यकस्यचिद्दाने, अथवा दुराग्रहेण यस्यकस्यचिदुपादाने महती विनष्टिः स्यात्। तस्मादवस्थानां तिसृणामपि परीक्षा अवश्यं कर्तव्या ॥

**८. अस्त्वेवम्। अवस्थानुक्रमणे किमिति भवद्भिः स्वप्न एव प्रथमः पठितः?**

यतस्तस्य मिथ्यात्वं स्फुटमिति सर्वसंप्रतिपन्नम्। अतोऽस्य विचारः शीघ्रतरं शक्यसमापनो भवतीति ॥

**९. किं स्वप्नदर्शनमेव मिथ्येत्यभिप्रायः?**

न। स्वप्नदृष्टा भावाः प्रबुद्धमात्रस्य बाध्यन्ते 'न ते मया तथ्यत एव दृष्टा भावाः, निद्राग्लानेन तु मम मनसा तथा तथा विकल्पितम्' इति। एवं च यद्यपि स्वप्नकाले विविधभेदाः सत्यत्वेन प्रतिभान्ति, तथापि पश्चात्तनबोधान्मिथ्याभवन्तीति स्वप्नमिथ्यात्वं सुखेनैव निश्चितं भवति ॥

**१०. साधूक्तम्। अथ जागरितमधिकृत्य विचारः प्रतायताम्। तत्र किं नाम जागरितम्?**

इन्द्रियैर्बाह्यविषयोपलब्धिर्जागरितम् ॥

११. यद्येवं तर्हि तदेव निष्पन्नं यन्मया पूर्वमुक्तम्(५) अयमात्मा द्रष्टा श्रोता मन्ता विज्ञानात्मा कर्ता भोक्तेति च। नहि भगवन्, स्वप्न इव जागरितेऽपि विषया देहेन्द्रियसंघातो वा मिथ्येति शक्यो वदितुम्। न हि जागरितोपलब्धोऽयं संघातो नाऽऽत्मन इत्यास्थातुं शक्यते। न हि स कस्याञ्चिदवस्थायां बाध्यते यथा स्वप्ने विकल्पितः संघातः। अथ कथमयमात्मा सच्चित्सुखरूप इति ?

अत्र ब्रूमः। यद्यपि जागरितोपलब्धोऽयं संघातः कस्याञ्चिदवस्थायां न बाध्यते[1], तथापि नायमात्मा अनेन नित्यसंबद्ध वक्तुं शक्यते। न हि स्वप्नेऽप्ययमात्मा एतेनैव संघातेन देहकरणवान् भवति। मिथ्याविकल्पितस्यान्यस्यैव संघातस्य दर्शनात् तत्र। तस्मान्नैतद्युक्तं वक्तुं यदयमात्मा स्वभावत एव द्रष्टा श्रोता कर्ता वेति॥

१२. ननु च भगवन्, तत्रापि जागरितवदेव द्रष्टृत्वादिकं यत्किञ्चिदुपलभ्यत एवाऽऽत्मनः। तत्कथमयमस्य स्वभावो न भवेदिति ?

शृणु। जागरितदृष्टानि देहकरणानि तावन्न स्वप्नेऽनुवर्तन्ते। अतो नायं जागरितकरणैस्तत्र द्रष्टृत्वादिधर्मवान् भवति। यत्पुनः स्वप्नोपलब्धैः करणैस्तत्र द्रष्टृत्वादिकमिवाभाति, बाध्यत एव तु तत्प्रबोध इति न मिथ्याकरणजातेन तथ्यत एवायं द्रष्टृत्वादिधर्मवान् इति भवताऽप्यभ्युपगन्तव्यम्। एवं च स्वप्नजागरयोः परीक्षणेनेदं तावत् सुनिष्पन्नं भवति यदयमात्मा द्रष्टृत्वादिविलक्षणस्वभाव एवेति॥

---

1. अत्र जाग्रत्स्वप्नयोर्भेदमभ्युपगम्यैव चिन्ता प्रतानिता। एषा हि विचारसरणिः सुलभग्रहणा वेदान्तं प्रविविक्षूणां जाग्रत्प्रधानबुद्धीनामिति। वस्तुतस्तु स्वप्नजागरितयोः सर्वसमतैवेति श्रीमद्गौडपादाचार्यैर्वैतथ्यप्रकरणे निर्धारितम्। तद्रहस्यं तु माण्डूक्यरहस्यविवृतितोऽवगन्तव्यं प्रौढजिज्ञासुभिः॥

१३. अथेदं जागरितं कस्य भवति ?

किमनेन निर्धारितेन ?

१४. यदि तावदयमात्मा जागरिते देहकरणादिमान् तदवस्थोपलब्धविषयाननुभवति, ततो यावत्तावदप्यस्य द्रष्टृत्वादिकमस्तीत्यभ्युपगन्तव्यं भवति। अथ न कस्यचिदेतज्जागरितम्, ततो 'नित्यं स्वप्नजागरसुषुप्तमवैति' इति यत्प्रतिज्ञातं तस्य हानं प्रसज्यते। अतः पृच्छामि कस्येदं जागरितं भवतीति ॥

शृणु तर्हि। य इदमनुभवति तस्य भवति ॥

१५. ननु सर्वेऽपि जागरितमनुभवन्त्येव ॥

सर्वेषामपि तर्हि जागरितं भवतीत्यापन्नम् ॥

१६. ननु न कोऽप्यत्र निर्णयः कृतः। किं वावगन्तव्यमनेन विचारणेन ?

बाढम्, न कोऽपि निर्णयो भवेदीदृशेन विचारेण। जागरितं कस्येति निर्णेतुं प्रवृत्तो भवान् सर्वस्यापि तद् भवतीत्यादावेव प्रकल्प्य प्रवृत्त इति को वा निर्णयः स्याद्भवतः ?

१७. ननु तथैवोक्तं भवद्भिरपि। यो यो जागरितमनुभवति तस्य तस्य तद्भवतीति हि भवद्भिरुक्तम् ॥

सत्यमुक्तम्। न तु मया कदाचिदुक्तं स्वप्नदृग्भिरपि जागरितमनुभूयत इति ॥

१८. नन्वेष एवाभिप्रायो ममापि। यद्यपि स्वप्नदृङ्न स्वप्नकाले एव जागरितमप्यनुभवेत्, तथापि यो यः स्वप्नं पश्यति स सर्वोऽपि स्वप्नादुत्थितोऽवश्यं जागरितमनुभवतीति खलु मयोच्यते ॥

एवम्। न तु त्वत्स्वप्ने त्वया परिदृश्यमानानां सर्वेषामपि जीवानां जागरितं भवतीत्येतदपि भवताऽभिप्रेयते ॥

१९. किं चातः ?

इदमतो भवति। यथा स्वप्ने भवता परिदृश्यमाना भवत्स्वप्न एवान्तर्भूताः, न तु तेषां भवत्स्वप्नं विहाय स्वतन्त्राऽपि काचित्सत्ता अस्ति। तथैव भवज्जागरिते परिदृश्यमाना भवज्जागरितान्तर्भूता एव। न तामवस्थां विहाय स्वतन्त्रापि काचित्सत्ता तेषां भवितुमर्हति। अत एवोक्तं मया, यो जागरितमनुभवति तस्यैव केवलं जागरितं भवतीति ॥

२०. किं मयेदानीं परिदृश्यमानाः सर्वेऽपि नैव जागरितमनुभवन्तीति भवतां मतम् ?

किं भवत्स्वप्ने परिदृश्यमाना जीवाः सर्वे तं स्वप्नं पश्यन्तीति भवतो मतम् ?

२१. आः ! इदानीं ज्ञातं मया। यथा मदितरे जीवाः स्वप्नं पश्यन्तीव प्रतिभान्ति तत्काले, न तु तथ्यत एव तथा, एवं मज्जागरितेऽपीतरे जीवा जागरितमनुभवन्तीव प्रतीयन्ते इति ज्ञातम्। कस्तर्हि वस्तुवृत्तेन जागरितमनुभवति ?

यः स्वात्मानं जागरितमनुभवन्तं मन्यते स एव ॥

२२. ननु सर्वेऽपि तथैव मन्यन्ते ?

न। परिहृतत्वात्। तेषां तथाभिमानवत्त्वे भवज्जागरितमेव हि प्रमाणम्। न खलु भवतोऽन्येऽपि भवज्जागरितमनुभवन्तीति भवता शक्यनिर्धारणमिति परिहृतोऽयं पक्षः ॥

२३. कथमेतत् ?

यद्धि किंचिद्भवता दृश्यते श्रूयते वा तत्सर्वं भवज्जागरितान्तर्गतमेव। न हि भवज्जागरितव्यतिरेकेण जागरितान्तरं तदनुभविता वा

भवतोपलब्धः क्वचिदपि। यदि नाम भवता उपलब्धचरं तादृशं जागरितमिति कल्प्येत, तदापि भवज्जागरित एव तस्याप्युपलब्धेर्भवज्जागरितान्तर्गतत्वमेव तस्यापि स्यात्। न त्वेव तद्व्यतिरिक्तत्वम्॥

२४. नन्वेवम्, अहमेक एव जागर्मि, न तु सन्ति मद्व्यतिरिक्ताः केचिदपि ये जाग्रति इति संपन्नम्। एतत्तु सर्वथा अनुभवविरुद्धं प्रतिभाति। न हि भगवन्, मया परिदृश्यमानं जगत्, तदन्तर्विभाव्यमानचेतनाचेतनभावसहितं सर्वं मिथ्याप्रतीतिमात्रमिति संभावनीयमिदम्। किं चैवं जन्मान्तरम्, इहलोकपरलोकौ, पुण्यपापकरणं तत्फलानुभोगश्चेत्येतत् सर्वं मिथ्येत्येवापद्यते। कर्मोपासनासम्यग्ज्ञानशास्त्राणि चैवं मिथ्यैव स्युः। तथा च सर्वव्यवहारलोपः प्रसज्यते॥

मैवं मंस्थाः। यत्कारणं सर्वमिदं त्वज्जागरितलब्धसत्ताकमित्येतावदुक्तं मया न तु त्वज्जागरितोपलब्धं सर्वं मिथ्येति। यद्यदुपलभ्यते जागरिते यथा यथा प्रत्यक्षादिप्रमाणैर्निश्चीयते च, तत्तत् तथैव स्वीक्रियते व्यवहारे इति कथमङ्ग सर्वव्यवहारलोपप्रसक्तिः? अनेन तु व्यवहारेण किं परमार्थत एवास्याऽऽत्मनः संबन्धः, आहोस्विन्नेत्येतावान् हि प्रकृतो विचारः। तत्र मयोक्तं न तेनास्य पारमार्थिकः संबन्धः, यतोऽयं स्वप्ने तेन सर्वथा विमुक्तो भवतीति॥

## सच्चित्सुखम्

२५. अथ कथमस्याऽऽत्मनो द्रष्टृत्वादिव्यवहारविमुक्तस्य सच्चित्सुखरूपत्वमिति?

यत्कारणमयमात्मा स्वप्नावस्थां जागरितावस्थां चेत्युभे अपि

पश्यति, अत एव सच्चिद्रूपः। अत एव च तत्तदवस्थोपलब्धदुःख-संस्पर्शरहितश्चेति सुखरूपः। तदेवमस्य सच्चित्सुखरूपत्वमवगम्यते ॥

२६. ननु मयोक्तं (१४) यावत्तावदप्यस्य द्रष्टृत्वादिकसंबन्धोऽभ्युपगन्तव्य इति। न हि जागरितावस्थायां बाह्यविषयद्रष्टृत्वादिकं तत्कृतसुखदुःखादिकं चानुभवन् न द्रष्ट्रादिरूपो भवति यावत्तामवस्थामधितिष्ठति। एवं स्वप्नमपि यावदधितिष्ठति तावत्तदवस्थाविषयकद्रष्टृत्वादिकं तस्याभ्युपगन्तव्यमेवेति कथं केवलं सच्चित्सुखरूपत्वं तस्य भवेदिति ?

नैतत्साधूक्तम्। यस्मादयमात्मा स्वप्नावस्थां जागरितावस्थां च पश्यन् चिद्रूपतां न व्यभिचरति। चिद्रूपत्वमेव चास्य सत्त्वमिति सच्चिद्रूपत्वं तावत्सिद्धमस्य। अवस्थासहसंबद्धं तु द्रष्टृत्वादिकमस्य न स्वाभाविको धर्मः। व्यभिचरद्रूपत्वात्। यदा खल्वयं जागर्ति तदा न स्वप्नं पश्यतीति न तदवस्थासहसंबद्धं द्रष्टृत्वादिकं जागरितेऽनुवर्तते। एवं यदा स्वप्नं पश्यति तदा न जागर्तीति न जागरितसहसंबद्धं द्रष्टृत्वादिकं स्वप्नेऽनुवर्तते। एवं द्रष्टृत्वादिकमात्मानं व्यभिचरद्दृष्टम्। यदि द्रष्टृत्वादिकमस्य स्वभावः स्यात्, न तर्ह्येनं व्यभिचरेत् तत्। न ह्यग्न्यादीनामौष्ण्यादिकं तत्स्वभावभूतमग्न्यादिकं व्यभिचरद्दृष्टं कदाचित् ॥

२७. ननु भगवन्, यावत्तावदपि द्रष्टृत्वादिकमनुभूयत एवेति मया शङ्कितम्। तत्रैव न परिहारो भवितुमर्हति। कथम्? यस्मिन्नेव देशे काले वा यदनुभूयते, तत्रैव चेत्तद्व्यभिचरेत, स्यादपि तस्यास्वाभाविकत्वम्। अनुभूयते चाऽऽत्मनि जागरिते द्रष्टृत्वादिकम्, न तु तत्र तद्व्यभिचारं दर्शयन्ति भवन्तः। स्वप्ने तु यस्तस्य व्यभिचारः प्रदर्श्यते, न तेन जाग्रद्द्रष्टृत्वादिकमपि बाध्यते। न हि देवदत्तः कदाचिद्गङ्गायां स्नातः

कदाचिद्गोदावर्यां स्नातीत्येतावता तस्य गङ्गास्नातृत्वं बाध्यते गोदावरीस्नातृत्वं वा। तद्वत् ॥

विषमोऽयं दृष्टान्तः। तत्र हि गङ्गा गोदावरी चैकस्मिन्नेव भरतखण्डे युगपद्भिन्नदेशयोः प्रवहतः। ततो यदा गोदावर्यां स्नातस्तदा न गङ्गायामिति वक्तुं युज्यते। अत एव नद्योस्तयोः पारमार्थिकत्वम्। अत्र पुनः स्वप्नजागरिते नैव युगपद्भवतः कस्यचिद्। न च यदैव जाग्रद्द्रष्टृत्वादिकमनुभवति तदैव स्वप्नद्रष्टृत्वादिकमपि कुत्रचिदन्यत्र वर्तत एव। गङ्गायां वाराणसीसमीपे प्रवहन्त्यां गोदावर्यपि नासिकासमीपे स्वतन्त्रं प्रवहति यद्वत्। अतो यस्मिन्नेवाऽऽत्मनि जाग्रद्द्रष्टृत्वादिकमभिमन्यते, तस्मिन्नेव तद्व्यभिचरति स्वाप्नद्रष्टृत्वाद्याभासात्मलाभे। तद्विपर्ययेण च स्वाप्नद्रष्टृत्वादिकमपि तत्काले सत्यत्वेन विभाव्यमानं व्यभिचरति जागरितद्रष्टृत्वाद्यात्मलाभे इति सम्यगेवोक्तं द्रष्टृत्वादिकं नात्मनः स्वभावः, रजतत्वादिकमिव शुक्त्यादेरिति। अथ यदुक्तं जागरिते यावत्तावदपि द्रष्टृत्वादिकमनुभूयत इति। तत्र ब्रूमः। तत्राप्यवस्थायां यदायं द्रष्टा तदा न श्रोता, यदा च श्रोता तदा न द्रष्टा। यदा पुनरयं मन्ता तदा न द्रष्टा नापि श्रोतेति सर्वानुभवसिद्धमेतत्। न चान्य एव श्रोता, अन्यस्तु द्रष्टा इति सम्यक्। योऽहं तदा अशृणवं सोऽहमेवेदानीं पश्यामीति प्रत्यभिज्ञानात्। तदेवं दृष्टिश्रुत्यादीनां तदभावानां च यश्चेतयिता स दृष्ट्यादिधर्मरहित एव नित्यसच्चिद्रूप इति गम्यते। किं चानित्यानां मूर्तानां च चक्षुरादीनामेव संयोगवियोगधर्मित्वात् दृष्ट्याद्यनित्यधर्मवत्त्वमिति युक्तम्। न त्वात्मनो विषयसंयोगजद्रष्टृत्वादिकं संभवति। तस्य

नित्यत्वादमूर्तत्वाच्च संयोगधर्मित्वानुपपत्तेः। इत्थं च जागरितेऽपि यद्द्रष्टृत्वादिकमवभासते, तत्तु चक्षुराद्युपाधिनिमित्तमेव न स्वाभाविकमिति सिद्धम्। उप समीपे आधीयन्ते तत्तद्धर्मवत्त्वापादनायेत्युपाधय उच्यन्ते चक्षुरादीनि। यदैव हि चक्षुरादीनि संनिधीयन्ते तदैवाऽऽत्मनो द्रष्टृत्वादिकं भाति नान्यदेति। स्वप्ने पुनरुपाधीनामपि व्यभिचारात्सुतरां न द्रष्टृत्वादिमत्त्वमित्युक्तम् ॥

२८. एवमपि कथमस्याऽऽत्मनः सच्चित्सुखरूपतेत्यत्र अद्यापि न मम निश्चयो जातः। किं कारणम्? सत्त्वं हि भवद्भिरत्र परमार्थसत्यत्वमभिप्रेयते व्यवहारे सत्त्वधर्मवत्त्वेन प्रतीयमानानां व्यावृत्त्यर्थम्। सत्यत्वं हि नाम सदाऽव्यभिचरितैकरूपेण विद्यमानत्वम्। न च घटादीनां तदस्ति। स्वकारणव्यतिरेकेण तेषामनुपलब्धेः। स्वप्नावस्थायां सुतरामसत्त्वाच्च। तत्रेदृशं सत्त्वमात्मनोऽपि न विद्यते। न ह्ययमात्मा सदा एकरूपेणैव विद्यत इति शक्यमवस्थातुम्। तत्कथमस्य विवक्षितं सत्त्वमिति?

शृणु। एष ह्यात्मा सर्वत्र सर्वदा ज्ञानैकरूपेण प्रकाशते। अत एव सिद्धमस्य चित्त्वात्मकं सत्त्वं स्वभाव इत्यवोचाम॥

२९. ननु ज्ञानं नाम जानातिधात्वर्थो मनोधर्मः। कथमिदमात्मनो नित्यस्य धर्मः स्यात्? अभ्युपगम्याप्यस्याऽऽत्मधर्मत्वमात्मनः सत्त्वमध्यवसातुं न प्रभवामि। कथं हि जागरिते 'इदं जानामि', 'इदं ज्ञास्यामि' इति प्रतिविषयभेदम् आद्यन्तयुक्तज्ञानविक्रियावान् सदा एकरूप इत्यध्यवस्येत? जाग्रत्स्वप्नदर्शित्वं तु स्फुटमेवास्य विक्रियावत्त्वमावहतीति नैवाहं जाने कथमयं सद्रूप इति ॥

शृणु तद्यथा। न तावज्जागरितविषयाः स्वयंस्फुरणस्वभावाः केनचिदभ्युपगम्यन्ते। 'इदं शृणोमि', 'इदं पश्यामि', 'इदं जिघ्रामि'-

इत्यादिरूपेण हि सर्वेषामनुभवः। तस्माद्यद्यपि शब्दादिविषयविषयीकरणं श्रोत्रादीनामेव, तथापि तच्छ्रवणदर्शनघ्राणनादिषु योऽनुगतो ज्ञाता स ज्ञानैकस्वभाव इत्यभ्युपगन्तव्यम्। न चेदं ज्ञानं मनसो धर्मः। यतस्तस्यापि मनसो रूपभेदाः पृथग्विधाः स्वप्रकाशनाय स्वोत्पत्तिविनाशसाधनाय च निमित्तान्तरमपेक्षन्त एव। तदेतन्निमित्तमेवाऽऽत्मनो ज्ञानमित्युच्यतेऽस्माभिः। अतः सिद्धं ज्ञानैकरूपत्वमात्मनः॥

३०. नैतद्युक्तमिव। कथं कृत्वा? मनोव्यतिरिक्ताः शब्दादयस्तावत्स्वयंस्फुरणहीना इति मनसो विषयीभूता एव विज्ञायेरन्। मनस्तु स्वच्छं द्रव्यं सर्वप्रकाशनसमर्थमिति तस्यैव धर्मो भवितुमर्हति ज्ञानम्। मनसैव हि विजानाति पुरुष इति प्रसिद्धमेतल्लोके। न पुनस्तस्यापि प्रकाशान्तरापेक्षा भवति। उपन्यस्तः खलु भवद्भिरेव दीपदृष्टान्तोऽत्रेति॥

मैवं सोम्य वादीः। किं भवदुक्तन्यायेनैव चक्षुःश्रोत्रादीन्यपि स्वेतरविषयीकरणसामर्थ्यवन्तीति तत एव स्वयंप्रकाशस्वभावानि भवेयुः? तथा च चक्षुरेव स्वात्मानं प्रकाशयेत्, श्रोत्रमेव च स्वात्मानम्। न हि भद्र, तथा दृष्टचरं क्वचित्॥

३१. नन्विदम् आत्मन्यपि समानं चोद्यम्। यद्यप्यात्मा स्वान्यविषयीकरणसमर्थः, कथं तावता तस्य स्वप्रकाशनसामर्थ्यमपि स्यादिति? न ह्यात्मा स्वयमेवात्मानं कदापि प्रकाशयति। इत्थं च तस्य प्रकाशने वस्त्वन्तरापेक्षा स्यात्। तदप्यस्त्विति चेत् तस्यापि प्रकाशकवस्त्वन्तरापेक्षा। ततस्तस्यापीति कुत्र वा स्यादवस्थानम्?

मैवम्। चक्षुःश्रोत्रादीनां तावदनेकत्वात् संहतत्वात् परार्थत्वं दृष्टमेव। दृष्टं हि तेषां मनसे स्वस्वविषयसमर्पणम्। एवं मन-

सोऽपि रूपभेदा नानाविधाः संहतत्वात् परार्था एवेति गम्यते। अनुभूयते च तेषामात्मार्थता। आत्मा तु नानेकस्वभावः। न परेण केनचित्संहतः, न वा चक्षुरादिवदेकैकविषयमात्रग्राहकः। मनस्तु यद्यपि स्वेतरं सर्वमपि विषयीकरोति, नैव तथा आत्मानमपि विषयीकर्तुं प्रभवति, अङ्गीकृतं चैतद्भवतापि। आत्मा पुनर्नैवं मनो न विजानाति। आत्मैव च मनसा सर्वं विषयीकृत्य विजानातीत्यपि सुप्रसिद्धमेतत्। यथा हि लोके सुलोचनसाहाय्येन सर्वं पश्यतः स्वभावत एव दर्शनशक्तिर्विद्यते। न तु सा शक्तिः कदाचिदपि सुलोचनस्येति भवति, एवं करणस्य सतो मनसो न कदापि भवति ज्ञानशक्तिः। तस्मादात्मैव सर्वदा ज्ञानस्वभाव इति सिद्धम्॥

**३२. ननु भगवन् मनो नानाविधान् विषयान् इन्द्रियद्वारेण विजानातीति लोके प्रसिद्धमेतत्। तत्र मनसः किं कृत्यमधिकृत्यैषा प्रसिद्धिर्भवेत्?**

शृणु तत्कृत्यम्। यदा यदा विषयज्ञानं जायते तदा तदा एतन्मनश्चक्षुरादीन्द्रियद्वारा निर्गत्य तत्तद्विषयाकारेण परिणमते। त एते परिणामविशेषा मनसो **वृत्तय** इत्युच्यन्ते। तथा तथा हि विषयाकारेण विपरिवर्तन्त इति कृत्वा। **प्रत्यया** इति च व्यपदिश्यन्ते। प्रत्येति ह्यात्मा विषयानेभिरिति। तदेवं मनोवृत्तिरूपेषु नानाविधेषु प्रत्ययेषूत्पद्यमानेषु विलीयमानेषु चायमात्मा नित्यविज्ञानैकरूपतां नैव व्यभिचरति। मनसो वर्णितप्रकारेण तद्विषयाकारपरिणतिं विना विषयज्ञानं नैव जायत इत्येतदालक्ष्य जना वदन्ति मन एव तु विषयान् विजानातीति। वस्तुतः करणभूतस्य तस्य ज्ञानकर्तृत्वं नैव घटत इति तु

व्यक्तमेव। अत एव च 'पूर्वमदोऽज्ञासिषम्, इदमिदानीं जानामि' इति व्यवहारोऽप्यवकल्पते। यदि हि मानसप्रत्यया ज्ञानकर्तारोऽभविष्यन्, तर्हि तेषां नानात्वात् 'अहमेव पूर्वमज्ञासिषम्, सोऽहमेवेदानीं जानामि, भाविकाले च ज्ञास्यामी'ति व्यवहारो नैवाभविष्यदिति॥

३३. नन्वेवं प्रतिविषयं ज्ञानमन्यथान्यथा जायत इति तेन ज्ञानविशेषेण विकारवानेवाऽऽत्मा ज्ञाता भवतीति कथं ज्ञानैकस्वरूप इत्यवगन्तुं पार्यते। यदि नाम कथञ्चिन् ज्ञानं स्वरूपं स्यादात्मनः, तथापि 'ज्ञानं जातम्', 'ज्ञानं नष्टम्' इत्यनुभवदर्शनात् आत्मैव तदा तदा जायते नश्यति चेत्यनिष्टमापद्येत। तथा हि नित्यचित्स्वभाव इति प्रतिज्ञा हीयेतेति॥

न युक्तैषा तवाऽऽशङ्का। यतो मनसि विविधाः प्रत्यया जायमानाश्चिद्व्याप्ताश्चिदाभासाश्च जायन्त इति तानात्मतत्त्वाविवेकिनो जना ज्ञानशब्देन व्यपदिशन्ति। व्यवहरन्ति च 'ज्ञानं जातम्', 'ज्ञानं नष्टम्' इति। यः पुनरनुभवस्तद्विषयक उदाहृतस्त्वया, स एव त्वात्मनो ज्ञानं स्वाभाविकमभिप्रेतमस्माभिः। तत्तु नैव कदाचिज्जायते नश्यति वेत्येकरूपमेव। एवं च 'अहमदोऽज्ञासिषम्', 'इदमिदानीं विजानामि'-इत्यादिस्थले जानातिविक्रिया मनस एव। सा च विक्रिया तत्तद्विषयाकारप्रत्ययरूपेण परिणाम आत्मचैतन्याभाससहितो ज्ञानशब्दवाच्यश्च लोकव्यवहारे। ज्ञानशब्दलक्षितस्वरूपं त्वात्मन एव। तच्चैतत्स्वरूपं सदैकरूपं न तु मनःप्रत्ययवद् व्यभिचरत्स्वरूपम्। तदेतदुभयमविविच्यैव तु लोके व्यवहारः 'अज्ञासिषम्', 'जानामि' 'ज्ञास्यामी'ति चेति न तेन आत्मनः किञ्चिद्धीयते। तदत्र तत्त्वजिज्ञासुना त्वेवमनुसंधेयम्। लोके हि विविधवर्णानि सुलोचनान्युपधार्य पश्यतो

विषया अपि तत्तद्वर्णा इवावभासन्ते। तत्र वस्तुनि वर्णाध्यारोपः सुलोचनकृत्यम्। वस्तुदर्शनं तु सदा चक्षुष एव भवति। एवमिहापि ज्ञानं नामाऽऽत्मनः स्वभाव एव। प्रत्ययास्तु ज्ञानाभासाः केवलं मनसो विकारा इत्यवगम्यते। किंचान्यत्, मनस्तावद् युगपद्विविधविषयाणां प्रकाशनाय यथास्थितं नैव प्रभवति। तत्तद्विषयाकारं प्राप्यैव तु स्वात्मचैतन्यप्रकाशाभासं सहायीकृत्यैव च क्रमेण विषयप्रकाशनाय कल्पते। आत्मा पुनः स्वरूपभूतेन चैतन्येन यथावस्थितेनैव युगपन्मनसः सर्वा वृत्तीस्तदस्तमयं च प्रकाशयतीत्यनुभवसिद्धमेतत्। अतोऽपि ज्ञानस्वभाव आत्मेत्यवसीयते ॥

३४. एतावता विचारेण किं निर्णीतं भवति ?

एतद्विनिर्णीतम्, यदात्मा जाग्रति मनसि विविधं विक्रियमाणेऽपि तद्विक्रियाः सर्वा अवभासयन् स्वतश्चिद्रूपतां नैव व्यभिचरतीति। स्वप्नेऽपि देहेन्द्रियविषयादिशून्ये तदाभासत्वेन मनोवासनायामुपलभ्यमानायामपि तेनैव स्वरूपेणावतिष्ठत इति सच्चिद्रूप एव सदाऽयमिति ॥

३५. एवं तर्हि स्वप्नजागराभ्यां सविक्रिय एव स्वात्मेति प्राप्तम्। असत्यपि ह्यस्मिन्नन्यतरावस्थागतविषयनिमित्तविकारे अवस्थाद्वयानुभवोऽस्य दुरपह्नव एवेति ॥

न। परिहृतत्वाच्छङ्कायाः। न हि स्वप्नजागरयोर्युगपदनुभवोऽस्ति, न चान्यतरानुभवकाले तदन्यावस्थायाः कुत्राप्यन्यत्र सद्भावः शक्यशङ्क इत्यात्मद्रष्टृत्वस्वभावपरीक्षणे परिहृतैषा शङ्का।

तस्मान्न ताभ्यामवस्थाभ्यामन्योन्यं व्यभिचरन्तीभ्यां सदैकरूपस्याऽऽत्मनः सविक्रियत्वं शक्यं शङ्कयितुं यथा रज्ज्वाः सर्पोदकधारावभासाभ्याम् ॥

३६. आत्मनः सच्चिद्रूपतायां ममेदानीं प्रत्ययो जातः। अथ कथमयमात्मा सुखरूप इति विचारयितव्यम् ॥

न विचारयितव्यमेतत् । यतः स्वप्नजागरितगतसर्वोपप्लव-राहित्यादेवाऽस्य सच्चिद्रूपस्य सुखरूपतापि निरातङ्कं सिध्यति । अथापि भवतस्तुष्ट्यर्थं ब्रूमः। लोके सर्वजनव्यवहारतोऽप्यात्मनः सुखरूपता अवगम्यते। कथम्? लोकः खलु दारपुत्रवित्तक्षेत्रादीन् बहिर्विषयान् सर्वानपि स्वात्मार्थमेव कामयते। एवं देहेन्द्रियमनांसि च स्वात्मार्थमेव प्रियाणि मन्यते। एषां हि यद्यन्यतमं स्वप्रतिकूलं प्रतिभाति तत-स्तद्धानाय यतते, यदेव तु स्वानुकूलवेदनीयं भवति तदुपादानाय च। अत इदमवगम्यते, आत्मार्थमेव सर्वं प्रियं भवतीत्यात्मैव सर्व-प्रियतम इति। न च दृष्टमेतद् यद्दुःखरूपे कस्मिंश्चिदपि वस्तुनि प्रेम-प्रसारणं नाम जनस्य। आत्मनि तु निरतिशयं प्रेमैव सदा भवतीति सिद्धं तस्य नित्यसुखरूपत्वमिति ॥

३७. ननु भगवन्, केचिज्जना आत्मन्यपि विरक्ता आत्महत्यायामपि प्रवर्तन्ते। तदिदं कथमुपपद्येत यदि सुखरूपत्वमेवाऽऽत्मन एकान्ततः?

नैष दोषः। मिथ्यात्मनो दुःखरूपत्वनिदर्शनेन सत्यात्मनः सुखरूपताया अप्रतिघातात्। न ह्यहं देहादेरात्मत्वं जातुचित् प्रति-ज्ञातवान्, येन तद्दुःखरूपत्वनिदर्शनेन सत्यात्मा नैकान्तेन सुखरूप इति स्यात्। अथाभ्युपगम्यापि ब्रवीमि। तच्छृणु यथा भवदुदाहृतदृष्टान्ते-

नाप्यात्मनः सुखरूपतैव दृढीकृता भवति। यत्सत्यं देहादावपि भवत्यात्ममतिर्निसर्गतोऽज्ञलोकस्येति। तथापि यावत्तस्मिन् आत्ममतिस्तेषाम्, तावत्तस्मिन् मिथ्यात्मन्यपि प्रियत्वबुद्धिरेवानुवर्तते न त्वप्रियत्वं क्वचित्। अत एव हि मूढो जनः पापाचरणेनापि देहादिपरिरक्षणे यत्नवान् भवति। यदा पुनस्तस्मिन् दुःखरूपतां पश्यति जनः, यथा तीव्रतररोगाद्युपहत आत्मघातेऽप्युद्यतः, तदा नैव तस्मिन्नात्मबुद्धिरवतिष्ठते। यतस्तद्व्यतिरिक्तमात्मानं प्रियं मत्वैव, तत्कामायैव दुःखरूपं तद्देहादिकं परितित्यक्षति। तदेवं यस्य कृते सर्वस्याप्यनात्मनः क्वचित् प्रियत्वेनाभिमतस्यापि परिजिहीर्षा समुन्मिषति, स आत्मा सर्वस्मात् प्रियतरो नित्यनिरतिशयसुखरूप इति भवद्दृष्टान्तेनापि दृढीकृतं भवति। तथा हि लोकानुभवानुवादिनी श्रुतिः – 'न वा अरे सर्वस्य कामाय सर्वँ प्रियं भवत्यात्मनस्तु कामाय सर्वँ प्रियं भवति।' (बृ. २-४-५) इति॥

**३८. ननु च भगवन्, जागरिते सत्येन मनसा सत्येन चेन्द्रियजातेन सत्यान् विषयान् उपलभमान आत्मा चिद्रूपेण सर्वदा एकरूपत्वात्, निरतिशयप्रेमास्पदत्वाच्च सच्चित्सुखात्मक इत्यवगन्तुं शक्यते। स्वप्ने पुनः सर्वथानिश्चितमिथ्यारूपे कथमिदं शक्यावगममिति ?**

किमनेन सत्यमिथ्याविभागेन कृतेन? यतः सर्वेऽपि भावा जागरितस्थाः स्वप्नस्था वा दृश्या एव, न तु चिद्रूपदृक्स्वभावाः। तत्तदवस्था प्रतिनियतप्रतीतिका एव, न त्ववस्थान्तरेऽपि लब्धसत्ताकास्ते। अनेके जडाः संहताः परार्था एव च सर्वे भावा उभयोरप्यवस्थयोः, न जातुचिदपि स्वप्रकाशा असंहतस्वभावाः स्वार्था वा। आत्मा पुन-

नित्यदृक्स्वभाव एवोभे अप्यवस्थे सममेव पश्यतीति नान्यतरावस्थाप्रतिनियतप्रतीतिकः। आगच्छन्त्योरपगच्छन्त्योर्वा अवस्थयोः स्वेनैवाव्यभिचरितेन रूपेण प्रकाशमानत्वात्। एकश्चायम्। योऽहं स्वप्नमद्राक्षं स एवेदानीं जागर्मीति प्रत्यभिज्ञानात्, स्वात्मन्यनेकात्मकताननुभवाच्च। असंहतः सर्वेण। अन्यतरावस्थायां स्वसंहतानामिव विभाव्यमानानामपि भावानां तदन्यावस्थायामननुगमात्। स्वार्थश्चायम्। सर्वेषामपि भावानामस्यार्थायैव प्रवृत्तिप्रतीतेः, अस्मात्परस्य चाभावात्। न चास्मिन् कचिद्द्वेष्यता अनुभूतचरी। न चोभयोरवस्थयोरुपलभ्यमानाः सुखदुःखाद्युपप्लवा एनं द्रष्टारं कदापि संसृजन्ति। न चानुयान्ति स्वेन प्रातीतिकेनापि रूपेणैनमवस्थान्तरे। तस्मात् सर्वथा सर्वत्राप्ययमात्मा सच्चित्सुखरूप एवेति सिद्धम्॥

३९. नन्वात्मा भवतां नित्यैकरूपोऽभिमतः। कथं तर्हि तस्यान्यान्यावस्थाप्राप्तिः? तत्प्राप्तेरेव हि तस्यैकरूपता मिथ्येति गम्यते। किं च आत्मनो यद्यपि सच्चित्सुखरूपता प्रतिज्ञायते, तथापि तत्र चिद्रूपस्यैव प्राधान्यमभ्युपेयम्। यतश्चिद्रूपत्वाश्रयणेनैव तस्य सद्रूपत्वानन्दरूपत्वे उपपाद्येते। तथा हि। चितिमत्त्वं प्रधानीकृत्यैव भिन्नभिन्नविषयाणां तत्प्रत्ययानां चोपलब्धेः सर्वत्र चिद्रूपेणानुगत आत्मा इति कृत्वा तस्याव्यभिचरितसद्रूपत्वमवगमितम्। चिद्रूपमेव च प्रधानीकृत्य तस्याऽऽनन्दरूपत्वमपि प्रसाधितम्। यद्धि सर्वथा न चेत्यते न तस्मिन् प्रीतिर्भवेदिति चित्संपर्कादेव प्रियत्वं वस्तुन इत्यतः स्वात्मनि नित्यचिद्रूपत्वादेव हि निरतिशयप्रियत्वमुपपादयितव्यम्। निरतिशयप्रेमास्पदत्वाच्चाऽऽनन्दरूपता अस्येति च। एवं चाऽऽत्मनश्चिद्रूपस्याव्यभिचरितसत्त्वं तावदवश्यमुपपादनीयं सच्चित्सुखत्वोपपादनाय। तदेव तु नोपपाद-

यितुं शक्यते। यत्कारणं यथैव स्वप्नजागरितयोः परस्परव्यभिचारात् नात्मरूपता, तथैव चिद्रूपस्यापि सुषुप्तेऽनुपलब्धेः स्वरूपव्यभिचारो दृश्यत इति तस्यापि नात्मरूपतेति युक्तम्। एवं च यदा चिद्रूपत्वमात्मन उपलभ्यते, तदा पर्यायेणात्रस्थाद्वयप्राप्त्या विकारित्वमात्मनः प्राप्नोति। यदा तु चिद्रूपस्याप्यनुपलब्धिर्यथा सुषुप्ते, तदा तस्य चिदेकरूपत्वमित्यपि मृषा स्यादिति कथं सच्चित्सुखरूप इति मम शङ्का जायते॥

शृणु सौम्य। न मयेदमुक्तपूर्वं सच्चिदानन्दरूप आत्मा स्वप्नजागरिते अनुभवतीति। जागरितं कस्य भवतीति पृष्टो हि य इदमनुभवति तस्येत्युत्तरमदाम् (१४)॥

४०. किमिदमुच्यते भगवता? किं जागरितं ममैव भवतीति न निर्णीतपूर्वमिदम्?

बाढं निर्णीतम्। अहमेवानुभवितेत्यभ्युपगमे एष एव निर्णयः॥

४१. नन्वभ्युपगन्ताप्यहमेव। तत्र को वा विशेषः?

भवत्वेवम्। तथाभ्युपगन्तुस्तव परमार्थस्वरूपं तु सच्चित्सुखरूपमित्युच्यते अस्माभिः। अतो न विरोधः॥

४२. तथा च सच्चित्सुखरूप आत्मैव तथाभिमानवानित्येव फलितम्॥

नैवम्। अहंपदार्थ एव तथाभिमानवान्, सच्चित्सुखरूपे त्वात्मनि न कोऽप्यभिमान इत्येव तु फलितम्॥

४३. नाहमिदं निर्धारयितुं पारयामि। यतः पूर्वमुक्तं भगवता यदहमेव सच्चित्सुखरूप इति। इदानीं पुनरिदमुच्यते यदहमेवाभिमानवान् न तु सच्चित्सुखात्मा इति। तदिदं कथं न व्याहतं वचः ?

न व्याहतम्। यतस्तव परमार्थरूपं सच्चित्सुखात्मकम्, त्वयि प्रतीयमानाहंरूपं त्वभिमानाश्रय इति खलूक्तं मया। तच्चेदमभिमानाश्रयभूतं रूपम् 'अहङ्कारः' इत्युच्यते शास्त्रकृद्भिः। तदेवं यद्यप्यहङ्कारे अवस्थात्रयप्रतीतिः, तथापि तव परमार्थरूपे न काचिदवस्था विद्यते। न चैवं वदतो व्याहतिः शङ्कनीया। यत्कारणं नायमहङ्कारो नाम तव नैजं रूपम्। तथात्वे हीदं सुषुप्तावप्यनुवर्तेत, न त्वनुवर्तते॥

४४. यद्येवं तर्हि चिद्रूपतापि न मम परमार्थस्वरूपम्, तस्यापि सुषुप्तावनुपलब्धेः। एतच्च मया पूर्वमेव (३९) विज्ञापितम्। इत्थं च नाहंकारो न वा भवद्दर्शितं चिद्रूपं सुषुप्ते विद्यत इति निस्स्वरूप एवाहं परमार्थत इति प्राप्नोति॥

नैवं मन्तुं युक्तम्। प्राक्तनकाले केचिद्बौद्धा एवमेव आत्मनः स्वरूपं नाम न किञ्चिदस्तीति युक्त्या निर्णीतवन्तः। सोऽयं शून्यवादो नाम। न त्वं सौम्य, तेषामनुयायी स्याः॥

४५. यदि भगवन् शून्यवादोऽप्यनुभवानुसारी तर्हि किमिति न स्वीकार्यः? अवस्थात्रयविचारणानिर्वृत्त एव तत्त्वानुभव इति हि भगवताप्युक्तम्॥

सत्यमुक्तम्। न तु भवदुक्तो वादोऽनुभवानुसारी। न वा भवन्निर्णयः सर्वावस्थाविचारणानिर्वृत्तः॥

४६. कथमिव?

यत्कारणं सुषुप्ते चैतन्यं नास्तीत्यत्र न किञ्चित् साधकं प्रमाणमस्ति॥

४७. कथं नास्ति? यदि हि सुषुप्ते चैतन्यमभविष्यत्, तर्ह्यवश्यं मया उपालप्स्यत। न तूपलभ्यते। न हि मया चैतन्यमन्यद्वा किञ्चित् सुषुप्ते उपलब्धचरम्। किमतो नावगम्यते चैतन्याभावः?

न। 'नोपलभ्यते किञ्चित्' इति वदतैव त्वया उपलब्धृस्वभावस्याभ्युपगतत्वात्। उपलब्धं हि पदार्थं निह्नुते भवान् सुषुप्ते, न तूपलब्धुस्तवोपलब्धिस्वरूपम्। तदेव हि चैतन्यं नाम ॥

४८. ननु भगवन्, मया चैतन्यमपि नोपलभ्यते सुषुप्ते ॥

मोपलभ्यताम्। न हि मयोक्तं चैतन्यं नाम तवोपलम्भनयोग्यं विषयान्तरमिति। अभ्युपगतं च त्वयैतत्। चैतन्यमेव हि तव स्वरूपमित्युच्यते मया। तच्चानन्यापेक्षं स्वयमेव स्फुरतीति च ॥

४९. कदा नु खल्वेवमभ्युपगतं मया? ननु भणाम्यहं चिद्रूपमेव नोपलभ्यते सुषुप्ते इति?

बाढम्। अत एव सिद्धमिदं यस्य तव चिद्रूपं नोपलभ्यते इति ब्रवीषि स त्वं चिद्रूप एवेति। चिद्रूपस्य चाविषयत्वादनुपलभ्यता, नाभावात्। एवं हि मन्यते भवान् यदि नाम कश्चिद्विषयोऽभविष्यत्तत्र, तर्हि नूनमुपालप्स्यत। यन्नोपलभ्यते सुषुप्ते किञ्चित्, ततो नास्ति तत्र कश्चिद्विषय इति। अत इदमभ्युपगतं भवति भवता, यामवलम्ब्य त्वं न किञ्चिदुपलब्धमिति प्रतिषेधसि विषयम्, सा उपलब्धिरवश्यमस्तीति। सा त्वेव तव चिद्रूपता। सा चाव्यभिचरिता सर्वत्रेति सिद्धं भवतः सच्चित्सुखरूपत्वमपि पूर्वोपपादितप्रकारेण ॥

५०. अत्र ममैषा आशङ्का जायते। स्वप्नजागरयोरहङ्कारस्य सत्त्वात् तस्यैव ते अवस्थे न तु सच्चित्सुखरूपस्येत्युक्तं भगवता पूर्वम्। सुपुप्ते नास्त्ययमहंकार इति च। अतः प्राप्तमिदं सुषुप्तिर्नाम सच्चिदानन्दरूपस्यैवावस्था, नान्यस्येति। तत्कथमिदमध्यवस्यामि नास्ति कश्चिद्विकारः सच्चिदानन्दरूपस्येति ?

शृणु। अत्र सुषुप्तिस्वरूपं तावद् विवेचनमर्हति। नाम कस्यापि विषयस्यानुपलम्भनम्। तत्र कथमेषा काचिदवस्थेति स्याद्वस्तुतः? कथं वा तया विकारित्वमात्मनः? यथा हि नीरोगो रोगीत्यपार्थकं वचः, तथा 'अयमात्मा विक्रियते अविद्यमानावस्थया' इत्येतदप्यपार्थकमेव वचः ॥

५१. कथमपार्थकम्? आत्मा हि स्वप्नजागरयोर्विषयतदाभासान् उपलभते, सुषुप्ते तु न– इत्युपलम्भनमनुपलम्भनं चेति द्वयमप्यात्मन एव खलु धर्म इति ॥

न। यथा हि विद्यमानदीपेऽपवरके यदा ये केचित् पदार्थाः, स्युः, तदा तानवश्यं प्रकाशयति स दीपः। यदा तु पदार्था न स्युः, तदा स्वयं यथापूर्वमेव प्रकाशते। उभयोरप्येतयोः कालयोर्दीपप्रकाशे न कोऽपि विशेषः प्रकाशनाप्रकाशनकृत इति प्रसिद्धमेतत्। एवमेव यदाऽयमात्मा स्वप्नजागरिते पश्यति, यदा च सुषुप्ते न किञ्चिदपि पश्यति, तदुभयत्रापि नैवास्य चिद्रूपद्रष्टृस्वभावे कोऽपि विशेषः शक्यशङ्कः। अत एव हि श्रुतिराह- 'यद्वै तन्न विजानाति विजानन्वै तन्न विजानाति न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात् न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात्' (बृ. ४–३–३०)

इति । तस्माद्विषयोपलम्भनानुपलम्भनकृतो विशेषः कश्चनाऽऽत्मनि भवतीति मिथ्यापादनमेतत्[1] ॥

## तुरीयम्

**५२. तर्हि सुषुप्तिरित्येषा नैव काचनावस्थेति जातम् ।**

सत्यम् । अत एव च निद्रादोषवशात् परिदृश्यमानेति विकल्पिता स्वप्नावस्था, सुप्तप्रबुद्धेनैव दर्शनयोग्येति विकल्पिता जागरितावस्था चेत्युभे अपि न परमार्थत आत्मन अवस्थे इत्यपि जातम् ॥

**५३. तत्रैवं स्थिते, अवस्थात्रयसतत्त्वनिर्णयेन आत्मस्वरूपं सुशकं विज्ञातुम् (४) इत्युक्तवतस्तत्र भवतः को वा अभिप्रायः ?**

उच्यते । दृश्यते हि 'स्वप्नजागरसुषुप्ताख्यम् अवस्थात्रयं नित्यमनुभवामः' इत्ययं दृढो विश्वासो लोकस्य । तस्यास्यैवं लोकसिद्धस्य अवस्थात्रयस्य परीक्षणे सम्यक्कृते सति निर्णीतं भवत्यात्मनो यथार्थं स्वरूपम् । परमार्थतश्च नास्त्येवावस्थात्रयानुभवोऽप्यात्मन इति च पर्यवसास्यतीति ममाभिप्रायः । एवं च मूलश्लोके 'यत्स्वप्नजागरसुषुप्तिमवैति नित्यम्' इत्यत्र लोकदृष्ट्या इति वाक्यशेषः, 'अवैतीव' इति इवशब्दलोपो वा द्रष्टव्यः ॥

---

1. अत्र सुषुप्ते न किञ्चिदुपलभ्यते इति सर्वजनीनानुभवं स्वीकृत्यायं निर्णयः कृतः । अर्वाचीनवेदान्तिनस्तु केचित् तत्रावस्थायां 'मूलाविद्या' नाम काचिच्छक्तिरात्माश्रया अनुवर्तते– इति प्रस्थानमास्थिताः । अस्यां बालबोधिन्यां तत्प्रस्थानं नैव विमृष्टम् । विस्तरस्त्ववस्थात्रयप्रक्रियाया "माण्डूक्यरहस्यविवृति"तोऽवगन्तव्यः ॥

५४. यद्येवं भगवन्, किमिदमुच्यते श्लोके 'तुरीयम्' इति ? यदा ह्यवस्थात्रयमेव नास्तीत्यभिप्रेयते, तदा कैव कथा तुरीयस्य स्थानस्येति ?

शृणु। अत्र तुरीयं नाम लोकविदितादस्मात् स्थानत्रयादन्यत् स्थानमिति नोच्यते[1]। किं तर्हि, इदमात्मतत्त्वं न स्थानत्रयानुभवितृस्वभावम्, अपि तु तद्व्यतिरिक्तचतुर्थस्वभावकमेवेति। यदाह श्रुतिः – 'नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतः प्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम्। ....। प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः' (मां. ७) इति। वस्तुतस्तु यदापि जागरितादिप्रतिभासोऽस्ति तदापीदं तुरीयस्वभावकमेव। न हि स्वभावः कदाचिदपि निवर्तेतेति नैव तुरीया काचिदवस्था अभ्युपगन्तव्या आत्मानुभवार्थम्। अवस्था हि नाम कश्चित् कालिको विशेषः। नैव त्विदं तुरीयं तत्त्वं कश्चित्तादृशो विशेष इति ॥

## परमहंसगतिम्

५५. यदि भगवदुक्तप्रकारेण नित्यसच्चित्सुखरूपोऽयमात्मा तर्हि किमितीदं स्वरूपमस्माभिर्न विज्ञायते तथेति ?

मनसोऽयं स्वभावो यदविद्यमानार्थप्रकल्पनं तथा प्रकल्पितेऽर्थे अभिमानश्चेति। तामेतां स्वाभाविकीं मनसः प्रवृत्तिं विनिवर्त्य स्वात्मतत्त्वैकग्रहणे बाह्यविषयेषु विरक्ताः परमहंसा एव समर्था नेतरे ॥

---

1. अत्र केचित् साधनविशेषैरवाप्यः समाधिरेव तुरीयं स्थानमित्यभिप्रयन्ति। तस्यास्य मतस्य खण्डनमन्यत्रैव 'माण्डूक्यरहस्यविवृत्यादौ' कृतम्, तत एवावगन्तव्यमितीहोपरम्यते, बालाधिकारत्वादस्य प्रकरणस्य ॥

५६. के वा परमहंसा नाम ?

श्रूयते हि काव्यादिषु राजहंसो नाम कश्चित् पक्षिविशेषः। यः किल नीरक्षीरमिश्रणात् नीरं निरस्य क्षीरमेव विविच्योपादातुं समर्थ इति वर्णयन्ति कवयः। एवमेव सन्ति केचित्पुरुषधौरेया, ये आत्मानात्मनोः सत्यानृतयोर्मिश्रीकृतयोर्निस्सारमनात्मपदार्थं निरस्य तत्र विरक्ता अभिमानरहिताः **शमदमादिसाधनसंपन्ना** आत्मतत्त्वं विविच्य गृह्णन्ति। तत्रैव यथोपदर्शितसच्चित्सुखरूपे निष्ठां लभन्ते च। त एव **परमहंसा** इत्युच्यन्ते ॥

५७. तत्र का विरक्तिर्नाम ?

रक्तिर्नाम रागो विषयेष्वभिमानपूर्वकं तैर्मनसो रञ्जनम्। **विरक्तिस्तु** तदभावः। तत्र ये केचिदनात्मनि विरक्तिमन्तस्ते सर्वं संन्यस्य **पारमहंस्यं नाम पारिव्राज्यम्** अवाप्य वेदान्तविचारे एव सदा कालं नयन्ते ॥

न तद्धंसादृशानामस्वीकृततुरीयाश्रमाणाम् आत्मज्ञानेऽधिकार इति प्रतिभाति ॥

नैतदेवम्। अनात्मवस्तुन्यारूढसक्तेः पुत्रदारगृहादिष्वभिष्वङ्गवतः कस्यचिदपि न विज्ञेयमिदमात्मस्वरूपम् — इत्येतावांस्तु ममाभिप्रायः। अतस्तत्त्वजिज्ञासुभिरिन्द्रियार्थेषु वैराग्यवद्भिरेव भाव्यम्। पारमहंस्यं त्वेषणात्रयत्यागरूपं विशेषाधिकाराधायकम् इत्यस्ति तत्र विशेषः ॥

## तद्ब्रह्म निष्कलमहं न च भूतसङ्घः

५९. साध्वेतत्। एवमनात्माभिमानं त्यक्त्वा स्वात्मतत्त्वं साकल्येन परिज्ञातवतोऽनुभवः कीदृशो भवेत्?

तस्यायमनुभवः 'अहं निष्कलं ब्रह्मैव' इति ॥

६०. अथ कोऽयं ब्रह्मशब्दार्थः?

उपनिषत्सु श्रूयते ब्रह्मस्वरूपवर्णनम्, तत्र ब्रह्मेति निरतिशय-बृहत् तत्त्वम्। नित्यशुद्धस्वरूपत्वात्, नित्यचिद्रूपत्वात्, नित्यमुक्त-स्वभावत्वाच्च ब्रह्मशब्दवाच्यस्य परमात्मनो निरतिशयबृहत्त्वमूरीक्रियते। तत्रैतादृशं ब्रह्म स्वात्मत्वेन विज्ञाय तस्मिन्नेवावस्थीयते ज्ञानिभिरिति तेऽपि ब्रह्मस्वरूपा एव ॥

६१. कीदृशं पुनरात्मज्ञानशून्यानां विज्ञानमिति?

तदुक्तं मया पूर्वमेव। ते हि पृथिव्यप्तेजोवाय्वाकाशलक्षणैः पञ्चभूतैरारब्धं देहेन्द्रियमनःसंघातमेव स्वात्मत्वेन परिगृह्य नित्यं वयं स्वप्नजागरसुषुप्ताख्यस्थानत्रयानुभवरूपं संसारं भजामः, अयमेवाऽस्माकं स्वभावः इति मन्यन्ते ॥

६२. को वा अमीषां पञ्चभूतानां स्वभावः?

भवतीति भूतम्। लोके हि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणलक्षणैः शब्द स्पर्शरूपरसगन्धाख्याः पञ्च विषया गृह्यन्ते। तेषां शब्दादीनामाश्रयत्वेन यथासंख्यं आकाशवाय्वग्निसलिलपृथिव्याख्यानि वस्तूनि भवन्तीति कल्प्यते जनैः। तान्येतानि पञ्च भूतान्युच्यन्ते। तेषां विविधा

संमिलितपरिणतिं लभमानानां सङ्घ एवायमनात्मभूतो देहेन्द्रियादि-सङ्घातः ॥

६३. किमेतैः पञ्चभूतैः कथमप्यात्मनो नास्त्येव कोऽपि संबन्धः ?

नाणुमात्रोऽप्येतैः संबन्ध आत्मनः । उपपादितं हि यथै-तानि विषयेन्द्रियमनआदिरूपेण परिणतानि विषयविषयिभावेन स्थितानीव प्रतिभासमानान्यपि नित्यविषयिणश्चिदात्मकस्याऽऽत्मन-श्चैतन्यप्रकाशदीप्तान्येवोपलभ्यन्ते जागरे । यथा चेदं तथा प्रतिपाद-यिष्यते द्वितीयश्लोकव्याख्यायाम् । तथा चामीषां नास्त्येव स्वतन्त्रा काचन सत्ता स्फुरत्ता वा आत्मसत्तास्फुरत्ताव्यतिरिक्ता जागरावस्थाया-मपि । स्वप्ने त्वेतेषामस्तित्वमपि नास्ति । वासनामात्रत्वात्तत्रत्यभावानाम् । सुषुप्ते पुनः स्वरूपमेवैषां व्यभिचरतीति कथङ्कारं कश्चन संबन्ध-एभिरसत्कल्पैरुत्प्रेक्ष्येताऽऽत्मनः ? प्रत्युत सच्चित्सुखात्मकस्य नित्यशुद्ध-स्वभावस्याप्याऽऽत्मनो मुखस्येवाऽऽदर्शदृश्यमानप्रतिबिम्बेन कल्पित-संबन्धं विना नास्त्येव वास्तविकः कश्चन संबन्ध इत्येवाऽऽस्थातुं युक्तम् । न हि सत्यानृतयोर्वास्तविकः संबन्धः शक्यकल्पन इति । अतः पञ्च भूतानीमानि बाह्याध्यात्मिकभावरूपेण परिणतानि जाग्रदवस्थामात्र-लब्धप्रतीतिशरीराणि न सन्त्येव वस्तुत आत्मव्यतिरेकेणेति ज्ञेयम् । यथैव चैभिर्न संबन्ध आत्मनः, तथा नित्याव्यभिचरितस्वरूपस्यास्य परस्परव्यभिचारिणीभिरवस्थाभिरपि न कश्चन संबन्ध इत्याकलनीयम् ॥

## प्रातः स्मरामि

६४. तदेतज्ज्ञानं प्रेप्सुभिः कीदृशं साधनं स्वीकर्तव्यम् ?

त एते 'वयं भूतसङ्घातरूपा देहेन्द्रियाद्याकारेण परिणताः' इति योऽयं नैसर्गिकोऽभिनिवेशः, या चेयं तादृशदेहादीनां तत्संबद्धत्वेनाऽभिमतानां च दारपुत्रक्षेत्रादीनामिष्टानिष्टोपपत्तिचिन्तापारम्परी नैसर्गिकी तदेतद्वयपरवशतां विहाय यथोपवर्णितं 'सच्चित्सुखं ब्रह्मैव स्मः। न त्वयं भूतसङ्घः' इति प्रतिदिनं प्रभातकाले अनुसंदध्युः। ये केचिदेवं भूतसंघतादात्म्यमिथ्याबुद्धिबन्धात् विमोक्षमात्मनस्तत्परतया इच्छन्तो यथोक्तानुसन्धानपरा भवन्ति त एते **मुमुक्षव** इत्यभिधीयन्ते ॥

मनुष्या हि चतुर्विधाः मुक्ता, मुमुक्षवो, विषयिणः, पामराश्चेति। तत्र पामरा पशुतुल्याः। यतस्ते स्वभावत एवाऽऽहारनिद्रादिचिन्तापरीता एव कालं नयन्ति। विषयिणस्तु बुद्धिजीविनः। यतस्ते लौकिकवैदिकशास्त्रोक्तकर्मनिरता इहलोकपरलोकयोरिष्टानिष्टप्राप्तिपरिहाराख्यामभ्युदयं प्राप्तुमीहन्ते। मुमुक्षवस्तु विवेकिनः। यतस्ते उक्तोभयविधफलभोगयोरपि विरक्ता भूतसंघातरूपदेहेन्द्रियाद्यभिमानलक्षणाद् बन्धाद्विमोक्षणार्थमात्मजिज्ञासायां तत्परा भवन्ति। मुक्ताः पुनरात्मज्ञानिनः। यतस्ते सर्वविधादप्याशापाशाद्विमुक्ताः। ज्ञातसर्वज्ञेयाः कृतसर्वकृत्यास्त एव धन्याः। अतो विवेकिभिर्मुमुक्षुभिः प्रतिदिनं प्रातःकाले स्मरणमङ्गलं हृदि संस्फुरदात्मतत्त्वं स्मर्तव्यमिति शम् ॥

इति श्रीसच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा विरचितायां
प्रातःस्मरणस्तोत्रव्याख्यायां
वेदान्तबालबोधिन्यां
प्रथमश्लोकव्याख्या

# २. आत्मा स्वयंप्रकाश

प्रातर्भजामि मनसो वचसामगम्यं
　वाचो विभान्ति निखिला यदनुग्रहेण।
यं नेतिनेतिवचनैर्निगमा अवोचु-
　स्तं देवदेवमजमच्युतमाहुरग्र्यम्　　॥ २ ॥

## संक्षेपतः श्लोकार्थः

यदनुग्रहेण वागादयो निखिला अपि विभान्ति स्वकार्यार्थं व्याप्रियमाणा दृश्यन्ते, यञ्च निगमा वेदान्ताः 'नेति नेति' इति कल्पित-रूपनिषेधेनैव अवोचुः, तन्मनसो वागादीन्द्रियाणां चागम्यम् अविषयी-भूतं स्वतःसिद्धमात्मतत्त्वं प्रातर्भजामि। तमात्मानं देवदेव इति, अजोऽच्युतोऽग्र्य इति चाऽऽहुर्वेदा ज्ञानिनश्च इति यथाश्रुतश्लोकार्थः॥

अथैतेषां श्लोक्तोपात्तानां विशेषणानामभिप्रायं पूर्ववत् गुरुशिष्य-संवादरूपेण व्याख्यास्यामः॥

## यन्नेतिनेतिवचनैर्निगमा अवोचुः

६५. अथ क इमे निगमा नाम ?

अत्र निगमशब्देन उपनिषद उच्यन्ते वेदान्तापरनामधेयाः। त हि वेदभागभूता नितरामात्मतत्त्वं गमयन्ति। तदुपदेशजनितज्ञान-मन्तरा च नास्त्यन्यः पन्थास्तदवगमायेति॥

६६. कथमिवाऽऽत्मतत्त्वं तासूपनिषत्सु वर्णितम् ?

इत्थं वर्णितम् 'अथात आदेशो नेति नेति' (बृ. २–३–६) इति, 'स एष नेति नेत्यात्मा' (बृ. ३–९–२६....) इति, 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेह-मच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनो-ऽतेजस्कमप्राणममुखममात्रमनन्तरमबाह्यम्' (बृ. ३–८–८) इति च ॥

६७. किमीदृशेन निषेधेन वर्णितेन प्रयोजनम् ? किमित्यात्मतत्त्वं साक्षादेव न वर्ण्यते शृङ्गग्राहिकया इदं तदिति, यथा सास्नादिमान् गौरित्येवम् ?

आत्मतत्त्वं नेदंतया शक्यवर्णनम्, अतोऽयमेव मार्गस्तत्प्रति-पादनाय, नान्यः। यदाह श्रुतिः "न ह्येतस्मादिति नेत्यन्यत्परमस्ति" (बृ. २–३–६) नेतिनेतीत्युक्तप्रकारात्, प्राप्तनिर्देशस्य सर्वस्यापि प्रतिषेधनात्, अन्यत् परं निर्देशनं नास्ति। अतोऽयमेव निर्देशो 'नेति नेति' इति– इति श्रुतेरर्थः। इयं हि श्रुतिः 'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च' (बृ. २–३–१) इत्यादिना सत्यशब्दवाच्यं पञ्च-भूततद्वासनात्मकं निर्दिश्य ब्रह्मस्वरूपनिर्देशार्थं प्रवृत्ता, तत्सर्वनिषेधे-नाऽऽह 'अथात आदेशो नेति नेति' (बृ. २–३–६) इति। न चेदं निष्प्रयोजनं वर्णनम्। आत्मनि कल्पितस्यातद्रूपस्य निवर्तनेन तत्त्व-स्वरूपमात्रसमर्पणात् सर्वानर्थबीजभूतस्याज्ञानस्य प्रहाणात् ॥

**मनसो वचसामगम्यम्, वाचो विभान्ति निखिला यदनुग्रहेण**

६८. किमर्थं पुनरीदृशमात्मतत्त्वमिति साक्षादेव नोपवर्ण्यताम् ?

यतो न शक्यमेवं कर्तुम्। तद्धि साक्षाद्वर्णयितुं शक्यते यत्र नामरूपकर्मजातिद्रव्यगुणादयो विशेषाः सन्ति। तद्द्वारत्वात् शब्दप्रवृत्तेः। यत्र पुनर्न नामरूपादिविशेषाः सन्ति, यन्नामादिसर्वशब्दप्रवृत्तिनिमित्तरहितम्, न तद्वचसा वर्णयितुं शक्यते, मनसा वा ग्रहीतुम्। अत एव श्रुतिः प्राह 'यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह' (तै. २-९) इति॥

६९. यद् भगवन्, न वाचा वर्णयितुं शक्यते, यच्च न मनसा मन्तुम्, तस्यास्तिता कथमित्रावगम्यताम् इति नाहं बुध्ये। यद्धि वचसां मनसश्चागम्यं तच्छून्यकल्पमेवेति मे मतिः॥

न। प्रत्युक्तत्वात्। प्रत्युक्तो ह्ययं **शून्यवादः** (४४-४८) प्रागेवाऽऽत्मनश्चिद्रूपस्याभाव्यनिरूपणवासरे। अत एव च श्रुतिः 'स एष नेतिनेत्यात्मा' (बृ. ३-९-२६, ४-२-४, ४-४-२२, ४-५-१५) इति भूयो भूयः सर्वविशेषानप्यपह्नुवाना परमार्थतत्त्वम् आत्मशब्देनैव निर्दिदेश। आत्मा च न प्रत्याख्यातुं शक्यः शून्यवादिनापि। य एव प्रत्याख्याता, तस्यैवाऽऽत्मत्वात्। आत्मा हि नाम स्वरूपम्॥

ननु यदत्यन्तमेवानुभवानारूढम्, यन्मनसो वचसां वा न गम्यम्, तच्छून्यकल्पमेवेति किमध्यवसातुमयुक्तम्?

मास्त्वेतदनुभवारूढम्। यस्मिन्ननुभवे आरूढं सत्सर्वमस्तीत्यध्यवस्यते भवता, तस्यैव त्वनुभवस्य स्वरूपमयमात्मेति तुष्यतु भवान्। न च मनसो वचसां चागम्यमित्येतावता असिद्धिर्भवेदात्मतत्त्वस्य। **स्वयंसिद्धानुभवरूप** एव ह्ययमात्मा मनो वचांसि चानुभवारूढानि

करोति। कथम्? वर्णा एव ह्यकारादयोऽर्थसङ्केतपरिच्छिन्ना नियतसंख्याका नियतक्रमाश्च लब्धशब्दाभिधाना वचांसीत्युच्यन्ते। तानीमानि वचांसि विवक्षितेऽर्थे प्रयुज्यन्ते वागिन्द्रियसहायेन पुरुषेणेति प्रसिद्धमेतत्। तच्च वागिन्द्रियं वर्णानामभिव्यञ्जकं करणम् आत्मानुग्रहेणैव स्वविषयमभिव्यञ्जयति, न स्वतः। न ह्यात्मचैतन्यानुग्रहविरहितं वचो नाम कल्पयितुमपि शक्यते। इदमुपलक्षणम्। एवमन्यान्यपि निखिलानीन्द्रियाण्यनेनाऽऽत्मचैतन्येनानुगृहीतान्येव हि स्वस्वविषयव्यञ्जनसमर्थानि भवन्ति। आत्मचैतन्यस्य तु जागरितवागादीन्द्रियसहायशून्यस्यापि व्यवहारो दृष्टः। सर्वत्र च वागादीन्द्रियविषयीकरणं दृष्टमात्मचैतन्यस्य। तदेवं वागादीनि यदनुग्रहेणैव विभान्ति, स्वस्वविषयव्यञ्जनसमर्थानि च भवन्ति, तदात्मतत्त्वं शून्यकल्पमिति वक्तुं न पार्यते केनचित्। एवं मनसोऽप्यात्मचैतन्येन व्याप्तस्यैव तद्भासा विभानं तदनुग्रहेणैव च स्वविषये गतिः। यस्य च यदनुग्रहप्रयुक्तं भानं प्रवृत्तिश्च, न तद् स्वानुग्राहकं विषयीकृत्य गमयितुमलमिति युक्तमेव। न हि दीपप्रकाशानुग्रहेण भासमानाः पदार्था दीपमपि विषयीकृत्य प्रकाशयितुं प्रभवेयुः। तस्माद्युक्तमुक्तं 'मनसो वचसामगम्यं वाचो विभान्ति निखिला यदनुग्रहेण' इति। तथा हि श्रुतिवचांसि 'यद्वाचाऽनभ्युदितं येन वागभ्युद्यते' (के. १–५), 'यन्मनसा न मनुते येनाऽऽहुर्मनो मतम्' (के. १–६), 'यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति' (के. १–७) इत्याद्यानि ॥

७१. यद्येवं केनाभिप्रायेणेदमुक्तं भगवता (६५) तदात्मतत्त्वं वेदान्तैकगम्यमिति? यदा खलु वेदान्तवाचो न प्रभवन्त्यात्मतत्त्वं वर्णयितुम्, तदा कथङ्कारं तास्तत्र प्रमाणं भवेयुः?

अत्रोच्यते। प्रमाणं हि नाम प्रमाकरणम्। **प्रमा** च यथार्थं ज्ञानम्। वेदान्ता एव आत्मविषयकं ज्ञानं याथातथ्येन जनयन्तीति तत्र **प्रमाणत्वेन** व्यपदिश्यन्ते। वाक्यजन्यं हि ज्ञानम् 'इदमीदृशम्' इति वस्तुवर्णनेनैव जायत इति नायं नियमः। यथा यथा तु वस्तुविषयकं श्रोतुरज्ञानं परिह्रियते तथा तथा शब्दपूगप्रयोगेण तज्ज्ञानं जन्यते इति स्थितिः। तद्यथा 'नीलं महत्सुगन्ध्युत्पलम्' इतिवत् वस्तुधर्मोपन्यासेन क्वचित्तद्विषयं ज्ञानं भवति। अत्र हि नीलत्वादीनि संभूयोत्पलस्याऽऽसाधारणधर्मं निर्दिशन्तीति तेषां सहोच्चारणेन श्रोतुरुत्पलज्ञानं संभवति। क्वचित्तु 'काकवद्देवदत्तगृहम्' इतिवत् अतद्धर्मभूतवस्त्वन्तरद्वारेणापि विवक्षितं वस्तु ज्ञाप्यते। न हि तत्र दृष्टान्ते काकवत्त्वं देवदत्तगृहस्य नियतो धर्मः। देवदत्तगृहसंबद्धेन वा, तदसंबद्धेनैव वा तदुपरि परिपतता काकेन दृश्यमानेन सममेव 'काकवद्देवदत्तगृहम्' इत्युपदेशः संभवति। उभयथापि हि देवदत्तगृहज्ञानमुत्पद्येतैव श्रोतुः। क्वचित्पुनरुपलक्षणभूतवस्त्वन्तरोपदर्शनं विनापि वस्तुनिर्देशो भवति। 'वातायनरहितं देवदत्तगृहम्' इतिवत्। तत्र हि वातायनवद्गृहपङ्क्तावुपलभ्यमानं गृहं तद्राहित्येनैवावगम्यते देवदत्तगृहमिदमिति। तदेवं यस्य वस्तुनः स्वभूता धर्मा विद्यन्ते नीलोत्पलादेरिवतत्र तदसाधारणधर्मेण, यत्र तु ते न लभ्यन्ते देवदत्तगृहादाविव तत्र तदुपलक्षकेनातद्धर्मभूतेनापि, अतद्धर्मनिवर्तनेन वा, वस्तुज्ञापनं संभवति। आत्मतत्त्वस्य च निर्धर्मकत्वात् 'येन वागभ्युद्यते' (के. १–४), 'येनाहुर्मनो मतम्' (के. १–५), इति वाङ्मनआद्युपलक्षणैः 'अशब्दमस्पर्शम्....' (क. १–३–१५), 'अस्थूलमनणु'

(बृ. ३-८-८), 'नेति नेति' (बृ. २-३-६)- इत्येवमतद्धर्मव्यावर्तनेन च तज्ज्ञापनात् वेदान्ता आत्मनि प्रमाणमिति व्यपदिश्यन्ते। अतो न विरोधः ॥

## तं देवदेवमजमच्युतमाहुरग्र्यम्

७२. नेतिनेत्यादिरूपेण अतद्धर्मनिराकरणेनैव केवलं कथङ्कारमात्मस्वरूपसमर्पणं भवेत् ?

तदुक्तं पूर्वमेव (३, ६९)। यद्धि स्वयंप्रकाशमनुभवरूपं वस्तु जिज्ञासोरात्मभूतं च, न तज्ज्ञापनाय परापेक्षा भवति। आत्मतत्त्वं च स्वयंप्रकाशमिति तस्मिन्विकल्पितस्य देहेन्द्रियादिधर्मस्य प्रतिषेधेनैव तत्स्वरूपज्ञानं सिध्यति सर्पादिविकल्पप्रतिषेधेनेव रज्जुस्वरूपज्ञानम्। सर्वस्य च जगतोऽस्मिन्नेव यथा कल्पितत्वं तथा प्रतिपादयिष्यते तृतीयश्लोकव्याख्यानावसरे। स्वयंप्रकाशत्वादेव ब्रह्मात्मा देवदेव इत्युच्यते वेदान्तेषु। 'तं देवतानां परमं च दैवतम्' (श्वे. ६-७) इत्यादिषु। देवा द्योतनात् अग्न्यादयः। इन्द्रियाणि च विषयप्रकाशनात्। तेष्वपि यः प्रकाशः स नित्यचित्प्रकाशस्वरूपस्याऽऽत्मन एवेति कृत्वा स देवदेव इत्युच्यते। प्रकाशवतां सर्वेषामपि प्रकाशयितेति तदर्थः ॥

दृष्टान्तेनैतत्सुखप्रतिपन्नं भवति। चन्द्रमा हि स्वकिरणैरेव भातीति लोकप्रसिद्धिः। भौतिकशास्त्रविद्भिस्तु परीक्ष्य निर्धारितमस्ति यच्चन्द्रमा न स्वयंप्रकाशः, सूर्यकिरणा एव चन्द्रमण्डलं प्राप्य प्रति-

स्फालिताश्चन्द्रमसः किरणा इति लोके विख्याता इति। अत्र लोकदृष्ट्या सूर्यो यथा भारूपस्तथा चन्द्रमा अपि भारूप एव। भौतिकशास्त्रदृष्ट्या तु सूर्यः परानपेक्ष एव स्वयंभानस्वभावः सन् लोकदृष्ट्या भारूपत्वेन प्रसिद्धस्यापि चन्द्रमसो भासको भवति। यथायं दृष्टान्तः, एवं प्रकृतेऽपि लोकदृष्ट्या मनसीन्द्रियेषु च स्वत एव प्रकाशोऽस्ति ; वेदान्तशास्त्रदृष्ट्या त्वात्मा एक एव स्वयंप्रकाशः परमार्थतः। स एव च स्वचैतन्यप्रकाशेन मन इन्द्रियाणि च स्वयंभानवत्त्वेन लोकप्रसिद्धान्यपि भासयति। अत एव सूर्यचन्द्रादिजडप्रकाशा अपि चक्षुर्ज्ञानप्रकाश्यास्तमेव चैतन्यप्रकाशमनुभासन्त इति सिद्धम्। तस्मादयमात्मा देवदेव इति। तथा च श्रुतिः 'तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्' (बृ. ४–४–१६), इति 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' (मु. २–२–१०) इति च ॥

**७३. स एष आत्मनः प्रकाशः कदा जातः ?**

नैष कदाचिज्जातः। स्वरूपभूतत्वात्। चैतन्यं ह्यात्मनः प्रकाशो नाम। न च चैतन्यं तस्य धर्मः। तत्स्वरूपमेवेति ह्युपपादितं प्रथमश्लोकव्याख्यायां (२८–३५) चिद्रूपतानिरूपणावसरे। न च स्वरूपस्य जातिर्मृत्युर्वा। यद्धि जायते तदवश्यं मृत्युमुपैतीति दृष्टम्। न चाऽऽत्मनो जन्ममृत्यू संभवतः। आत्मत्वादेव। न हि निःसाक्षिके आत्मनो जन्ममरणे सिध्यतः। अभ्युपगम्यमाने तु

साक्षिणि स एव परमार्थात्मा चैतन्यप्रकाशस्वभावः सर्वावभासकः। स्वतो जन्ममरणरहितश्चेति सिद्धमात्मप्रकाशस्य जन्ममरणराहित्यम्। अत उच्यते 'तं देवदेवमजमच्युतमाहुः' इति। श्रुतिश्चात्र भवति 'स वा एष महानज आत्माऽजरोऽमृतोऽभयो ब्रह्म' (बृ. ४-४-२२) इति। अग्र्यश्चायं सर्वकारणत्वात्। तथा हि श्रुतिः 'तमाहुरग्र्यं पुरुषं महान्तम्' (श्वे. ३-१९) इति। स्मृतिश्च 'न मे विदुः सुरगणाः प्रभवं न महर्षयः। अहमादिर्हि देवानां महर्षीणां च सर्वशः।' (गी. १०-२) इति। अत एव ब्रह्मविदस्तं देवदेवम् अजमच्युतमग्र्यं चाहुः॥

७४. ननु भगवन्, प्रथमश्लोकव्याख्यानावसरे उक्तम् आत्मा 'सच्चित्सुखरूपः' इति। इदानीं तूच्यते आत्मा निर्धर्मक इत्यतो नेतिनेतिवचनैरेवोपनिषत्सु निर्दिश्यत इति। किं नैतद्विप्रतिषिद्धम्?

न विप्रतिषिद्धम्। यत्कारणं सच्चित्सुखत्वमपि न तादृग्धर्मविशेषवत्त्वं विवक्षितम्। तथा हि सद्रूपत्वं तावदनात्मवद्व्यभिचरितस्वरूपत्वनिराकरणार्थमुच्यते। चित्त्वं च परप्रकाश्यत्वनिषेधार्थम्। सुखत्वं च दुःखरूपतानिषेधार्थम्। तदेवं सच्चित्सुखरूपत्ववाचोयुक्त्यापि तत्तदनात्मधर्मविनिवृत्तिरेवाभिप्रेयते इति न कोऽपि विरोधः। वस्तुतो हि वीक्ष्यमाणे आत्मन्यसद्रूपतेव सद्रूपतापि नास्त्येव, अचिद्रूपतेव चिद्रूपतापि नास्त्येव, दुःखरूपतेव सुखरूपतापि नास्त्येव, प्रत्यस्तमितसर्वविशेषो ह्ययमात्मेति॥

## प्रातर्भजामि

७५. नन्वेवं भगवन् आत्मब्रह्मादित्वमप्यस्मिन्नास्त्येवेति प्राप्तम्। कथं तर्हि

**'आत्मतत्त्वम्', 'तद्ब्रह्म निष्कलमहम्' इत्युक्तम् ? कथं वा सर्वथा निरस्तविशेषमेतादृशं रूपं चेतस्यारोप्यं भवेदिति ?**

सत्यम्, आत्मत्वादिविशेषोऽप्यस्मिन् परमार्थवस्तुनि नास्त्येवेति। तथाप्यध्यारोपितनामरूपद्वारेणैव निर्दिश्यते 'सच्चित्सुखम्' इतिवत् 'आत्मतत्त्वम्', 'ब्रह्म', 'देवदेवः', 'अजः', 'अच्युतः', 'अव्ययः', इत्यादिशब्दैरपि। तेन च निर्देशेन अनात्माब्रह्मरूपतादिनिवृत्तिरेव क्रियते। तावत्तावच्च शिष्यजनाज्ञानव्यपोहो भवति। तदेवमुपदेशार्थमेव आत्मब्रह्मादिशब्दा इति न तैरात्मत्वब्रह्मत्वादिविशेषा वस्तुन्यभ्युपगता भवन्ति। तदेवं सच्चित्सुखादिशब्दैरिवात्मादिशब्दैरप्यतद्व्यावृत्तिपरैर्ब्रह्म लक्ष्यते न तूच्यत इति 'मनसो वचसामगम्यम्' इति यदुक्तं तदेव स्थितम्। निरस्तसर्वविशेषस्य चास्य साक्षात्स्वरूपनिर्देशनं तु प्राप्तसर्वनिर्देशप्रकारप्रतिषेधद्वारेणैव नेतिनेत्यादिशब्दैरिति च। सर्वशब्दप्रत्ययागोचरमप्यात्मतत्त्वमीदृशोपदेशेनाधिकारिजिज्ञासूनामनुभवारूढं भवत्यनायासेन साधनान्तरतृष्णां च वारयति मुमुक्षूणां स्वात्मन्यवस्थाने इति निषेधमुखनिर्देशे विशेषः ॥

तस्मान्मुमुक्षुभिरतीतश्लोकविवरणोक्तेन मार्गेण प्रतिदिनं प्रातरुत्थायेदमात्मतत्त्वमप्रमादेनानुसंधातव्यम्। अनुसंधानकालेऽपि सुदीर्घकालाभ्यस्तानात्मवासनावासिते चित्ते पुनरप्यनात्मस्मृतय एव प्रादुर्भवेयुः। तदा तन्निराकरणेन आत्मतत्त्वमेव भजनीयम्। भजनं नाम तस्मिन्नेव तत्परतया अवस्थानम्। यथा हि लोके यस्मिन् कस्मिंश्चिदपि प्रियरूपे वस्तुनि स्मृतिपथं गतेऽनुपदमेव तत्प्राप्त्याशा संजायते, तदर्थं चातीव यत्यते तदर्पितमनोभिर्जनैः। तेन वस्त्वन्तरे वैरस्यमौदा-

सीन्यं च भवति यावत् स्वाभीष्टवस्तुप्राप्तिः। प्राप्ते चेप्सिते वस्तुनि परमा प्रीतिर्जायते तस्मिन्नेव च मनो रमते इति प्रसिद्धमेतत्। एवमेव आत्मतत्त्वं दा कदा यदा अनुसंधीयते तदा तत्परतया तत्तादात्म्यावस्थानार्थमध्यवसायः कर्तव्यः। तत्स्वरूपप्राप्त्या च तस्मिन्नेव प्रेम करणीयं रतिश्चेत्येवमर्थमिहोपदिश्यते 'आत्मा प्रथमं तावत् प्रयत्नपूर्वकं प्रतिप्रातःकालं स्मर्तव्यः, स्मृतिलाभानन्तरं चेतररागविस्मरणपूर्वकं स एव च सादरं भजनीय' इतीति शम्॥

इति श्रीसच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा विरचितायां
प्रातःस्मरणस्तोत्रव्याख्यायां
वेदान्तबालबोधिन्यां
द्वितीयश्लोकव्याख्या

# ३. आत्मैवेदं सर्वम्

प्रातर्नमामि तमसः परमर्कवर्णं
पूर्णं सनातनपदं पुरुषोत्तमाख्यम् ।
यस्मिन्निदं जगदशेषमशेषमूर्तौ
रज्ज्वां भुजङ्गम इव प्रतिभाति तं वै ॥ ३ ॥

यस्मिन् अशेषमूर्तौ सर्वात्मके इदं नामरूपात्मकं अशेषं जगत् रज्ज्वां भुजङ्गम इव प्रतिभाति अविद्यादृष्टिमताम्, तं वै श्रुतिप्रसिद्धं विद्वदनुभवप्रसिद्धं च तमसः परम् अर्कवर्णं पूर्णं पुरुषोत्तमाख्यं सनातनपदं नमामीति यथाश्रुतश्लोकार्थः ॥

अथ श्लोकोपात्तानां विशेषणानामभिप्रायं व्याख्यास्यामः पूर्ववत् ॥

## यस्मिन्निदं जगदशेषमूर्तौ प्रतिभाति

७६. यदेतदात्मतत्त्वव्यतिरिक्तम् अनात्मत्वेन पृथक्कृतं भवद्भिः, तद्वस्तुतो नैवाऽऽत्मसंबद्धमितीदमुक्तं प्राक् (६३)। कुतस्त्यं तर्हीदमनात्मशब्दवाच्यं देहादिकं बाह्यजगच्च ?

एतदप्यात्मन एव संभूतमाकाशादिपञ्चकम्, तत्परिणाम एव च देहादिर्भूतसङ्घः। 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। पृथिव्या ओषधयः। ओषधिभ्योऽन्नम्। अन्नात्पुरुषः' (तै. २-१) इति श्रुतेः। न ह्यात्मनः सकाशादन्यत्किमप्यस्ति परमार्थतः ॥

७७. ननु कथमिदं जगदनात्मसंज्ञम् आत्मसंभूतमपि नैवाऽऽत्मसंबद्धमिति ?

शृणु। वस्तुतो नैवाऽऽत्मसंबद्धमित्युक्तमस्माभिः पूर्वम्। अविचारसिद्धाविद्यादृशां तु जगदशेषमिदमात्मसंबद्धं प्रतिभाति। अतो न विरोधः ॥

७८. तेषां वा तथा प्रतिभाने को हेतुः स्यात्?

अत्र हेतुरयमेव यद्विचार्यवस्तुस्वरूपानिर्धारणम् ॥

७९. ननु भगवन्, श्रुतिरुदाहृता 'एतस्मादात्मन आकाशः संभूतः' इत्येव वदन्ती। तत्किं श्रुतेरपि मृषावचनत्वं स्यात्? अभ्युपगन्तव्ये तु श्रुतिप्रामाण्ये आत्मनः सत्यत एवेदं जगज्जातं प्रतीयत इति स्वीकार्यं भवेत्?

न। श्रुतेरतन्निष्ठत्वात्। न हीयं श्रुतिराकाशादिजगज्जन्म कथयिष्यामीति प्रवृत्ता, किं तर्हि ब्रह्मणः सत्यज्ञानानन्तरूपतां प्रतिपादयिष्यामीति। तत्प्रतिपत्त्युपायत्वेन त्वविद्वद्दृष्ट्या प्रतीयमानं जगदिदं सर्वं ब्रह्मैवेति व्याचष्टे। 'सच्च त्यच्चाभवत्। निरुक्तं चानिरुक्तं च। निलयनं चानिलयनं च। विज्ञानं चाविज्ञानं च। सत्यं चानृतं च सत्यमभवत्। यदिदं किं च' (तै. २–६) इति। अयमर्थः। यदिदं दरीदृश्यते मूर्तं चामूर्तं च निर्वचनीयमनिर्वचनीयं च, आश्रयभूतमनाश्रयभूतं चेति विभाज्यमानम्, चेतनमचेतनं च सत्यं च मिथ्या चेतीत्येतत्सर्वं ब्रह्मैवाऽभवत् अनात्मज्ञदृष्ट्या इति। अत एव ह्युत्तरत्रैवमाह 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति' (तै. २–७) इति। यदा तु परमार्थतोऽदृश्ये- अविकारभूते। अनात्म्ये- अशरीरे, अनिरुक्ते- सर्वथा निर्वक्तुमशक्ये,अनिलयने–आश्रयान्तररहिते सर्वाश्रयभूते, अभयं प्रतिष्ठां विन्दते तादात्म्येनावस्थानं लभते अथ- तदैव अभयं गतो भवति- इति

श्रुतेरर्थः । अविदुषः पुनः फलमाह— 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति' (तै. २–७) इति । यदैव तु स्वल्पमप्यस्मिन् ब्रह्मणि भेदभावं करोति तदैव तस्य भयं भवतीत्यर्थः । तस्माच्छ्रुतेर्जगत्सृष्टिप्रतिपादननिष्ठत्वाभावात्, अविद्यादृष्ट्या संभूतस्य जगत अनुवादमात्रेण न मृषावादित्वं स्यात् । प्रत्युत ब्रह्मणि जगत्संबन्धो नैवास्तीति विदुषो भयराहित्यकथनादस्मदुक्त एव श्रुत्यर्थोऽपीत्यवसीयते ॥

८०. अविद्वद्भिर्विचार्य तत्त्वनिर्धारणाभावमात्रेणाऽपि कथमविद्यमानं जगद् वस्तुत्वेन प्रतीयेतेति न पश्यामि ॥

को वा ब्रूते अविद्यमानं वस्तुत्वेन प्रतीयत इति ? विद्यमानमेव खल्वात्मतत्त्वम् अविचारदृष्टेरनात्मरूपेण प्रतिभातीति भणामि । यच्च किंचिज्जगद्रूपं दृश्यते श्रूयतेऽपि वा तदेतत्सर्वं वस्तुत आत्मैवेति विद्धि । अशेषमूर्तिर्हि देवः । 'पादोऽस्य विश्वा भूतानि' (ऋ. १०-९०-३) इति मन्त्रवर्णात् । 'यस्यैष महिमा भुवि' (मु. २–२–७) इति च श्रुतेः ॥

## रज्ज्वां भुजङ्गम इव

८१. अत्र व्यामुग्धमिव मे मनः । यत्कारणं पूर्वमुक्तं भगवता आत्मनि नास्ति कश्चिद्विशेषाकार इति । इदानीं सूच्यते सर्वेऽप्याकारा आत्मन एवेति । तत्कथं न व्याहतं वच इति ?

न व्याहतम् । यतः पूर्वमुक्तमात्मनो निर्विशेषत्वं यत् तद्विद्वद्दृष्ट्या । इदानीं सूच्यमानम् आत्मन्येव सर्वेऽप्याकारविशेषाः

प्रतीयन्त इत्येतदविद्वद्दृष्ट्या। आत्मनि प्रतीयमानो हि विशेषो रज्जुभुजङ्गमन्यायेन वेदितव्यः॥

८२· कथं तस्य न्यायस्यात्र प्रवृत्तिः ?

इत्थम्। रज्ज्वां हि वस्तुतो वीक्ष्यमाणायां नास्त्येव कुत्रापि तस्या अवयवे भुजङ्गमः। अथ च मन्दान्धकारे सा भुजङ्गमवदवभासत इति दृष्टमेतत्। अत्र प्रत्येत्येव केवलं भुजङ्गम इति न तु तत्र भुजङ्गमोऽस्तीति रज्जुरेवानिश्चितस्वरूपा भुजङ्गमत्वेन विकल्प्यत इत्यविवादम्[1]। एवमेवाऽऽत्मापि द्वैतजगद्रूपेण विकल्प्यतेऽज्ञैरिति ज्ञेयम्। न ह्यनात्मा नाम वस्तुतो लब्धस्वतन्त्रसत्ताक आत्मनि कदाचिदभूत्, भवति वा विकल्पनाकालेऽपि। तथाप्यनिश्चिततत्स्वरूपाणामविदुषाम् आत्मैव विविधाकारवदनात्मेव प्रतिभाति। तस्मादनात्मापि वस्तुत अत्मैव नान्यः। प्रतीयमानं तु रूपं तस्याज्ञानकार्यमित्यवसीयते॥

८३· ननु भगवन्, रज्ज्वां भुजङ्गमस्याभावेऽपि स्वयं यत्रकुत्रचिद्भुजङ्गमोऽस्त्येवेति भ्रान्त्या रज्ज्वामपि तत्प्रतीतिर्भवेत्। अत्र पुनर्न ह्यात्मनो व्यतिरिक्तं सत्यं जगद्यत्रकुत्रचिदपीति कथमविद्यमानस्यैव जगतो भ्रान्त्यापि प्रतीतिर्भवेदात्मनीति विस्मयते मम चेतः॥

मा स्म वत्स, दृष्टान्तमात्रमवलम्ब्य तर्कशरणो भूः। न हि मया रज्जुभुजङ्गमदृष्टान्तबलादेव केवलमात्मनि जगद्भ्रान्तिः साध्यते येनेत्थं

1. रज्ज्वां भुजङ्गमः कथं ख्यातिं लभते, किं वा तस्य स्वरूपमित्यत्र वादिविप्रतिपत्तिरस्ति। अनुशाङ्करव्याख्यानप्रस्थानमवलम्बमानाश्च केचित् स्वतन्त्रामेव काञ्चन प्रक्रियां रचयन्ति। तद्विमर्शस्तु शुक्तिरजतख्यातिविचाराद‍्ध्यासभाष्य **'सुगमा'**- व्याख्यानस्थादवगन्तव्यः॥

पर्यनुयोगः स्यात्। दर्शितं हि सार्वलौकिकानुभवावष्टम्भेन यथाऽयमात्मा सच्चित्सुखघन एव निर्विशेष इति। अवस्थात्रयपरीक्षणेन हीदमवगतं यज्जाग्रन्मात्रनियतभाविनोऽस्य जगतः स्वप्ने सुषुप्ते वा नास्त्येव स्वरूपमिति। आत्मा च विनैव जगत्साहचर्यं सुषुप्तेऽपि स्वरूपेणानुवर्तत इति च। तत्रैवं स्थिते याऽस्य जगतः काचित्की प्रतीतिरात्मनि, सा रज्ज्वां भुजङ्गमप्रतीतिवदपारमार्थिकीत्येतावन्मात्रं मया **दृष्टान्तेन** विशदीकृतम्। तस्मात्, यथा 'अयं भुजङ्गमः' इत्याकारेण प्रतीयमानं वस्तु न रज्ज्वां नाप्यन्यत्र कुत्रचिदस्ति, रज्जुरेव तु भुजङ्गमस्य तत्त्वम्, तथैव 'इदं जगत्', 'अहं मनुष्यः' इत्याकारेण प्रतीयमानं वस्तु नाऽऽत्मनि न तदन्यत्र वा कुत्रचिदस्ति। आत्मैव तु तस्य तत्त्वम् इत्येव त्वं दृष्टानुसारेण निश्चिनु, न हि दृष्टेऽप्यनुपपन्नं नामेति॥

## तमसः परमर्कवर्णम्

**८४. यद्यात्मनोऽन्यन्नास्त्येव परमार्थतः, तदज्ञानतोऽनात्मप्रतिपत्तिरप्यात्मन एवेत्यापन्नम्। तत्किमिदानीमात्मैवाज्ञानाश्रय इत्यभ्युपगम्यताम्?**

ओम्। विचारात्प्रागात्मन्येव भवत्यज्ञानं, तत्रैव चानात्मजगत्प्रतीतिः। परमार्थतस्तु नात्मन्यज्ञानं जगद्वा विद्यते। यथैव ह्ययमात्मा अनात्मभूतं जगद्विषयीकृत्यैव गृह्णाति विविच्य, तथैवाज्ञानमपि विविच्य गृह्णातीत्यतः सिद्धं न विषयिणि सच्चिदात्मके आत्मनि विषयभूतस्याज्ञानस्य मनागपि संसर्ग इति। अत एव हि श्रुतिः 'वेदाहमेतं पुरुषं महान्तम् आदित्यवर्णं तमसः परस्तात्' (श्वे. ३–८) इति॥

**८५. ननु पूर्वमुक्तं नाऽऽत्मनः कश्चिद्वर्णोऽस्तीति तस्य निर्विशेषत्वं स्थापयद्भिः। तत्कथमयमादित्यवर्ण उच्यत इदानीम्?**

अयमुदाहृतश्रुतेरभिप्रायः। यथा ह्यादित्ये प्रकाशैकरूपे तमस्संसर्गस्य संभवो नास्ति। एवमात्मनि चित्प्रकाशैकरूपे अज्ञानस्य संभवो नास्तीति। अज्ञानम्, तमः, अविद्या, मोहः, भ्रमः- इति पर्यायाः। तस्यास्याज्ञानतमसः संसर्गो न कथञ्चिदणुमात्रमप्यात्मादित्यस्य नित्यचित्प्रकाशस्वरूपस्येति ॥

८६. ननु तर्हि जगत्प्रतीतेः कावसरः ?

नास्त्येव कोऽप्यात्मदृष्ट्या ॥

८७. ननु सन्ति बहवो ये आत्मज्ञानिन इति गण्यन्ते। तेऽप्यस्मादादिवदेव व्यवहरन्ति। यदि हि तेषां जगत्प्रतीतिर्न स्यात्, कथं नु तेषां व्यवहारोऽत्रकल्पेत ?

यद्युपरिवर्णितविधया आत्मदृष्ट्या वीक्ष्यते, तर्हि नैवोपलभ्येरन् ज्ञानिनोऽज्ञानिनो वा आत्मव्यतिरिक्ताः। नापि देहेन्द्रियविषयाः। अविद्यातिमिरान्धदृष्टीनां तु सर्वमिदं सर्वदा भातीत्यविचित्करमेतत् ॥

## पूर्णं सनातनपदं पुरुषोत्तमाख्यम्

८८. तदेतदात्मतत्त्वं किंकिंरूपेण कदा कदा कुत्र कुत्र भवति ?

इदं सर्वदा सर्वत्रैकरूपेणैव भवति। तस्यास्यैवाऽऽख्या पुरुषोत्तम इति ॥

८९. कथमेतदिति विस्तरेण वक्तुमर्हति भगवान्।

शृणु। तदेतत्तत्त्वं सनातनं शाश्वतम्। यतः कालकृतपरिच्छेदरहितम्। कालस्याप्येतदतिरेकेणाभावात्। 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि' (तै. ना. १) इति श्रुतेः। पूर्णं च सर्वव्यापकम्।

'तेनेदं पूर्णं पुरुषेण सर्वम्' (तै. ना. २८) इति श्रुतेः। लोके पूर्णत्वेनाभिमतस्य आकाशस्याप्येतदधीनसत्ताकत्वादेतेनैव पूर्णः सोऽपीति। 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तै. २–१) इति श्रुतेः। **पुरुषोत्तमाख्यं** चेदम्। यतो वस्तुकृतपरिच्छेदशून्यम्। एतदतिरेकेण कस्यापि द्वितीयस्य वस्तुनोऽभावादेव। 'एकमेवाद्वितीयम्' (छां. ६–२–१) इति श्रुतेः॥

१०. कथं पुनर्वस्तुकृतपरिच्छेदाभावमात्रेण पुरुषोत्तमाख्या ?

उच्यते। जाग्रत्स्वप्नयोरुपलभ्यमानं सर्वमपि व्याकृतं **क्षरसंज्ञं** भवति। नश्वरस्वभावत्वात्। सुषुप्तिप्रलययोः शक्तिरूपेणावस्थितमिति यदनुमीयते तदक्षरसंज्ञं भवति। यद्यपि परमार्थदृष्ट्या सुषुप्ते न किञ्चिदप्यात्मव्यतिरिक्तं वस्तु विद्यत इति दर्शितं प्रागस्माभिः। 'न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तम्' (बृ. ४–३–२३) इति च श्रुतेः। तथापि मन्दधियः कल्पयन्ति, सुप्तिप्रलययोरयं प्रपञ्चो बीजरूपेण विद्यत एव, कथमन्यथा जाग्रति स्थितिकाले वा संभवेदस्य पुनः प्रतीतिरिति। तदेतदज्ञैरनुमानेन कल्प्यमानं प्रपञ्चबीजम् **अक्षरसंज्ञं** भवति। आत्मा तु वर्णितं क्षरमक्षरं चातीत एव परमार्थतः। नित्यनिवृत्तद्वितीयवस्तुतत्संस्कारसंपर्कत्वात्। यथोक्तं **गीतासु** 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः॥ यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥' (गी. १५–१६, १७, १८) इति॥

९१. सर्वमपि विद्यमानं वस्तु देशकालवस्तुपरिच्छेद्वदेव दृश्यते लोके। यद्यद्धि विद्यमानवस्त्विति विभाव्यते तत्तत् कस्मिंश्चिद्देशे काले वा अवश्यं विभाव्यते। वस्त्वन्तराच्च तद्बुद्धिर्विनिवर्तत इति प्रसिद्धमेतत्। आत्मतत्त्वमेव तु सकलवस्त्वन्तरविलक्षणम्, सर्वथाप्युक्तपरिच्छेदत्रय-शून्यमित्यत्र को हेतुः ?

शृणु तत्र कारणम्। सर्वाण्यपि हि वस्तूनि सह कालाकाशाभ्याम् अनात्मभूतानि आत्मन्येव लब्धस्थितिकानि भान्ति। अनात्मा च रज्ज्वां भुजङ्गम इव प्रतीतिशरीरमात्र इत्येतदस्मिन् प्रकरणे प्रदर्शितमस्माभिः। प्रकरणं नाम शास्त्रैकदेशसंबद्धो ग्रन्थः। वेदान्तशास्त्रे च परमात्मा देशकालवस्तुकृतपरिच्छेदशून्यः प्रत्यगात्मानन्यश्चेत्येष प्रधानभूतो विषयः। एष एवार्थोऽस्मिन् प्रकरणे स्वप्नजागरसुषुप्ताख्यावस्थात्रयपरीक्षणेनोपपाद्य रज्जुसर्पदृष्टान्तेन विशदीकृतः। यथा हि रज्ज्वां प्रतीयमानः सर्पो रज्जुस्वरूपे न किञ्चिदतिशयावहो न्यूनतापादको वा, एवमेव देशकालवस्तून्यपि निर्विशेषे अद्वितीयात्मस्वरूपे न किञ्चिदतिशयावहानि न्यूनतापादकानि वा। सत्यानृतयोर्हि न कथञ्चिदपि कश्चन संबन्धोऽस्तीति ॥

## प्रातर्नमामि

९२. तत्रैवं सति यथोक्तात्मवस्तु ज्ञातवता किं कार्यमिति भगवतो मतम् ?

का वा तस्य कार्याकार्यचिन्ता ? यथा हि कश्चिदभिलषितवस्तुप्राप्तौ तस्मिन्नेव रत आनन्देन कालं नयति, एवमसावपि ज्ञानी प्रातरुत्थाय स्वात्मनः स्वप्नजागरसुषुप्ताख्यावस्थात्रयातीतत्वम् उपशान्तसर्वप्रपञ्चत्वं सच्चित्सुखात्मकत्वं च मनस्यनुसंदधाति। तस्यैव मनोवागगोचरस्य स्वयंप्रकाशस्य मनोवागादिसकलकरणजातस्यापि ज्योतिष्ट्वानु-

ग्राहकस्य जन्मादिविकाररहितस्य नित्याविलुप्तस्वरूपस्य समस्तजगत्कारणतां च पुनःपुनर्विभावयन् तमेव भजते। जगत्कारणं सदिदमात्मतत्त्वम् अज्ञदृष्ट्या सकलविशेषरूपेण प्रतिभासमानमपि स्वरूपेण क्षराक्षरसंज्ञितस्य बीजाङ्कुरभावेन वर्तमानस्यास्य जगतो गुणदोषैरणुमात्रमप्यसंस्पृष्टं रज्जुसर्पवत्प्रतिभासमात्रशरीरस्यास्य परमार्थाधारभूतं नित्यशुद्धबुद्धमुक्तस्वभावं चेति मत्वा सर्वात्मानं तमेव नमस्करोति। एवं तत्स्मरणदर्शनमननविज्ञानातिशयाल्लब्धतद्भावस्तस्मिन्नेव रतः, विगतसर्वविषयाभिलाष आनन्देन कालं नयति। न हि तादृशस्य नित्यमुक्तस्य इदं कर्तव्यम् इदमकर्तव्यम् इति विधिनिषेधगोचरतासंभवति। सर्वथा कृतकृत्यत्वात्। तथा हि श्रुतिः 'अथात आत्मादेश एवात्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेद९ सर्वमिति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दस्स स्वराड् भवति' (छा. ७–२५–२) इति। स्मृतिश्च 'एतद्बुद्ध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारत' (गी. १५–२०) इति॥

इति श्रीसच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा विरचितायां
प्रातःस्मरणस्तोत्रव्याख्यायां
वेदान्तबालबोधिन्यां
तृतीयश्लोकव्याख्या

---

# ५. स्तोत्रपठितॄणां फलम्

**श्लोकत्रयमिदं पुण्यं लोकत्रयविभूषणम् ।**
**प्रातःकाले पठेद्यस्तु स गच्छेत् परमं पदम् ॥**

यस्तु इदं पुण्यकरं श्लोकत्रयं 'प्रातः स्मरामि' इत्यादिकं लोकत्रयस्याप्यलङ्कारभूतं प्रातःकाले सुषुप्तेरुत्थाय पठेत् स मानवः परमं पदं मोक्षाख्यं गच्छेत् चित्तशुद्ध्यादिक्रमेणेति यथाश्रुतश्लोकार्थः ॥

अथ श्लोकविशेषणाभिप्रायः स्तोत्रपाठफलं च विशदीक्रियते ॥

## श्लोकत्रयमिदं लोकत्रयविभूषणम्

९३. ये त्विमं प्रकरणदर्शितमर्थं सहसा साक्षात्कर्तुमसमर्थास्तैः किमनुष्ठेयम् ?

तेषामप्यस्ति किंचित्साधनम्। ते सर्वे प्रतिदिनं प्रातरुत्थायेदं श्लोकत्रयं पठेयुरादरात्। एते हि श्लोकाः परममङ्गलस्वरूपस्य ब्रह्मणः प्रतिपादकत्वेन स्वयं मङ्गलरूपाः। अत एषां श्रद्धाभक्तिपुरस्सरं पाठात् पठितॄणामतिशयिता पुण्यावाप्तिर्भवेत्। किं चायं श्लोकत्रयान्तर्गतो विचारः स्वर्गमर्त्यपातालाख्यलोकत्रयस्याप्यलङ्कारभूतः। न हि लोकत्रयेऽपि ब्रह्मात्मलाभविचारतोऽधिको मङ्गलतरो विचारो विद्यते। अथवा लोकत्रयविभूषणमित्यस्यान्यथापि व्याख्यानं भवति। स्वाभाविकशास्त्रीयोभयव्यवहारास्पदं ग्राह्यवस्तुग्राहकज्ञानरूपेण विभक्तं जागरितं **लौकिक**मित्युच्यते। सर्वलोकसाधारणत्वात्। तदाभासरूपं स्वप्नस्थानं **शुद्धलौकिक**मित्युच्यते। प्रतिपुरुषमन्तर्विभाव्यमानत्वेन स्वासाधारणत्वात्। सर्वथा ग्राह्यग्रहणविभागरहितं सुषुप्तं **लोकोत्तर**मित्युच्यते। लोकातीतत्वात्। तदेवं लौकिकादिनाम्ना अभियुक्तैर्व्यपदिश्यमानमव-

स्थात्रयमिह लोकत्रयशब्देनाभिधीयते। लोक्यतेऽनुभूयत इति लोकः अनुभवगोचर इति यावत्। एतत्त्रयव्यतिरेकेण चानुभाव्यविषयासंभवात् एतदेव लोकत्रयम्। यस्मादस्मिन् श्लोकत्रये अवस्थात्रयविचारावसेयं मङ्गलरूपमात्मतत्त्वं प्रशंसितम्, तस्मादवस्थात्रयविभूषणभूतमिदम् ॥

## पठितॄणां क्रमेण परमपदप्राप्तिः

९४. तथापि श्लोकानां पठनमात्रेण कथं परमपदगमनं भवेत्?

उच्यते। प्रतिदिनमेषां प्रातःकाले पठनेन पठितुश्चित्ते पुण्यवासना उपचिता भवति। ततः स्ववर्णाश्रमधर्मानुष्ठानेन भगवत्तोषणाच्चित्तशुद्धिर्भविता। ततश्च वैराग्यविवेकमुमुक्षादिसाधनसंपत्तिर्भवेत्। तदनु सद्गुरुपादमूलं प्राप्य तत्प्रणिपातपरिप्रश्नादिसाधनलाभः। तदनु वेदान्तश्रवणमनननिदिध्यासनक्रमेणाऽऽत्मतत्त्वस्य पूर्णमेव विज्ञानं समुदेति। तत्र **श्रवणं** नाम वेदान्तवाक्यार्थस्य आप्तेभ्य आकलनम्। **मननं** च श्रुतस्यार्थस्य पुनः पुनः सार्वत्रिकानुभवानुसारियुक्त्या परिशीलनम्। **निदिध्यासनं** पुनस्तस्यैवार्थस्य मनस एकाग्रीकरणेन तदेकध्यानेन स्वानुभवारूढतापादनम्। एतद्धि श्रवणमनननिदिध्यासनरूपं साधनमेकतां गतं मुमुक्षूणां प्रापयितृ तद्विष्णोः परमं पदमिति ॥

इति श्रीमत्पूज्यपादशङ्करभगवच्चरणस्मरणपरिचर्यावाप्तवेदान्तप्रवेशेन
श्रीबोधानन्देन्द्रसरस्वतीशिष्यश्रीसच्चिदानन्देन्द्रसरस्वत्याख्येन
भिक्षुणा निर्मिता
प्रातःस्मरणस्तोत्रस्य [illegible] संपूर्णा
ॐ तत्सत्

# सार्थविशेषशब्दानुक्रमणिका

अत्रत्याः सङ्ख्या ग्रन्थशरीरस्थखण्डपरामर्शिकाः

**अक्षरम्**– मिथ्याज्ञानकल्पितं जगद्बीजम्, ९०

**अक्षयः**– मूलकारणभूतः परमात्मा, ७३

**अच्युतः**– विकारहीनत्वान्नाशरहित आत्मा, ७३

**अजः**– जन्मादिविकाररहित आत्मा, ७३

**अज्ञानम्**– आत्मस्वरूपस्याज्ञानादन्यथैव ग्रहणम्, ६५, ८८

**अवस्थात्रयम्**– जाग्रत्स्वप्नसुषुप्तानुभवस्थितिविशेषाः, ५

**अविद्या**– अज्ञानशब्दं पश्यत ।

**अहङ्कारः**– अभिमानाश्रयभूतमन्तःकरणम्, ४३

**आत्मतत्त्वम्**– आत्मनः परमार्थस्वरूपम्, ४

**आत्मानुग्रहः**– आत्मचैतन्येन प्रदीपनम्, चिदाभासः, ७०

**आत्मा**– स्वरूपम्, सर्वेषां परमार्थस्वरूपभूतः परमात्मा, २, ६९

**इन्द्रियाणि**– आत्मनो विषयज्ञानार्थं कर्मार्थं चापेक्षितानि करणानि, (अस्मिन् प्रकरणे श्रोत्रादिज्ञानेन्द्रियाण्येव विशेषतः परामृष्टानि), १०

**उपलक्षणम्**– अविशेषणमथ च वस्तुज्ञापकम्, ७१

**उपाधिः**– यत्साहचर्याद्वस्तु तथा तथा विभाव्यते यथा चक्षुर्निमित्तमेवाऽऽत्मनो द्रष्टृत्वमात्मनो भातीति तद्द्रष्टृत्वे चक्षुरुपाधिरिति व्यपदिश्यते, २७

**एषणात्रयम्**– पुत्रैषणा, वित्तैषणा, लोकैषणेति त्रितयम्, यत्प्रयुक्तं सर्वं कर्म, ५८

**क्षरम्**– विनशनशीलं जगत्, ९०

**चैतन्यम्**– स्वरूपभूतं ज्ञानरूपमात्मनः, चिद्रूपमित्यपि व्यपदिश्यते, २८, ३३

**जागरः**– इन्द्रियैर्विषयोपलब्धिः; जागरा, जागरितम्, जाग्रत्, प्रबोधावस्था-इति नामान्तराण्यस्यैव, १०

**ज्ञानम्**– आत्मनः स्वरूपभूतं चिद्रूपम्; ज्ञानाभासः प्रत्ययः, ३३ । द्रष्टव्यः प्रत्ययशब्दः ।

**तत्त्वम्**– तस्य भावः, परमार्थस्वरूपम्, ४

**तमः**- अन्धकारवदात्मतत्त्वतिरोधायकत्वेन कल्पितमज्ञानम् , ८५

**तुरीयम्**- चतुर्थम् , अवस्थात्रयानुभवितृरूपाद्विलक्षणमित्यभिप्रायेण आत्मतत्त्वं 'तुरीयम्' इत्युच्यते, ५४

**दृष्टान्तः**- विवक्षितार्थविशदीकरणाय लोकदृष्टस्य कस्यचिदर्थस्य निदर्शनम् , ८२

**द्रष्टृत्वादिकम्**- द्रष्टा, श्रोता, मन्ता, विज्ञाता, कर्ता, भोक्ता- इत्येवं देहेन्द्रियमनआदिव्यापारकर्तृत्वम् , ४

**निगमाः**- उपनिषदः, निश्चयेनाऽऽत्मतत्त्वं गमयन्तीति कृत्वा, ६५

**निदिध्यासनम्**- मनसस्तदेकध्यानेनानुभवपर्यन्ततापादनम् । नेदं भावनारूपम् , किंतु चित्तैकाग्रीकरणेन रत्नादिपरीक्षणवदात्मन्येवैकाग्रीकरणेनान्वेषणम् , ९४

**निर्धर्मकम्**- निर्गुणमात्मवस्तु, ७१

**निर्विशेषम्**- नामजात्यादिविशेषरहितमात्मतत्त्वम् , ६८

**पञ्चभूतानि**- पृथिव्यप्तेजोवाय्वाकाशानि, गन्धाद्यसाधारणगुणवन्ति, ६२

**परमहंसाः**- बाह्यविषयेषु विरक्ताः परमात्मैकशरणाः परिव्राजकाः परमार्थसंन्यासिनः, ५६

**पुरुषोत्तमः**- क्षराक्षरातीतः परमात्मा, ८९

**पूर्णः**- सर्वव्यापकः परमात्मा, ८९

**प्रकरणम्**- शास्त्रैकदेशविवेचनपरो ग्रन्थविशेषः, ९१

**प्रत्यक्षादीनि**- प्रत्यक्षम् , अनुमानम् , उपमानम् , शब्दः, अर्थापत्तिः, अनुपलब्धिः - इत्येतानि यथार्थज्ञानकरणानीति दर्शनकारैरभ्युपगतानि, २४

**प्रत्ययः**- अन्तःकरणवृत्तिविशेषो येन बाह्यविषयो ज्ञायते, ३२

**प्रमा**- यथार्थज्ञानम् , ७१

**प्रमाणम्**- प्रमाकरणम् , ७१

**ब्रह्म**- सर्वथापि निरतिशयबृहत् परमात्मस्वरूपम् , ६०

**भूतसङ्घः**- पञ्चभूतैरारब्धो देहकरणसङ्घातः, ६२ ; द्रष्टव्यः सङ्घातशब्दः ।

**मनः**- अन्तःकरणम् , यस्य प्रत्ययैर्बाह्यवस्तूनि विज्ञायन्ते, तस्यैव 'हृत्' इति नामान्तरम् , २

**मननम्**- श्रुतस्य वेदान्तार्थस्य पुनःपुनरनुभवानुसारियुक्त्या परिशीलनम् , ९४

**मुमुक्षवः**- भूतसङ्घरूपदेहादितादात्म्यमिथ्याबुद्धिबन्धान्मोक्षमिच्छवः, ६४

**लोकदृष्टिः**- व्यवहारे स्थितानां जनानां दृष्टिः, ७२

**विकल्पः**- रज्जौ सर्प इव मनःकल्पितविशेषाकारः, ८२

**विषयः**- ज्ञानकर्मभूतं वस्तु, २। इन्द्रियार्थः शब्दादिः, २९; यद्यपि ज्ञानेच्छाकृतिसंस्कारदोषाः सर्वे एव सविषयाः, तथापि ज्ञानकर्मभूत एव त्वत्र विषयत्वेन विशेषतो व्यपदिश्यते।

**विषयी**- प्रकाशनकर्ता, ज्ञाता, २

**वृत्तयः**- अन्तःकरणपरिणामविशेषाः। अस्मिन् प्रकरणे ज्ञानरूपपरिणामविशेषा एव प्रत्ययापरनामधेया वृत्तिशब्देनोच्यन्ते, ३२

**वेदान्ताः**- उपनिषदः, ६५

**वेदान्तः**- उपनिषदर्थनिरूपकं दर्शनम्, ९१

**शब्दप्रवृत्तिनिमित्तम्**- नामरूपजात्यादि, यन्निमित्तीकृत्यैव शब्दो वस्तुषु वर्तते, ६८

**शमदमादीनि**- शमो दम उपरतिस्तितिक्षा श्रद्धा समाधानाख्यानि साधनानि, ५६

**शास्त्रदृष्टिः**- शास्त्रस्थितानां परमार्थदृष्टिः, ७२

**शून्यवादः**- सर्वं निरात्मकमेव, सर्वथा निःस्वभावम् इत्यातिष्ठमानानां बौद्धानां वादः, ६९

**श्रवणम्**- वेदान्तवाक्यार्थग्रहणम्, ९४

**श्रुतिः**- उपनिषद्वाक्यम्, ६७

**संहताः**- अन्योन्यसाहाय्येन कार्यकारिणः, ३१; तेषां समूह एव सङ्घसङ्घातादिशब्दवाच्यः। यथा देहेन्द्रियसङ्घातः, भूतसङ्घः इति॥

**सच्चित्सुखरूपत्वम्**- स्वरूपतः सत्यज्ञानानन्दत्वम्, २८

**सनातनः**- कालापरिच्छिन्नः, शाश्वतः, ८९

**साक्षी**- सर्वस्य साक्षाद्द्रष्टा, चिद्रूप आत्मा, ७३

**सुषुप्तम्, सुषुप्तिः**- स्वप्नरहिता सुप्तिः, यत्र नैवाऽनात्मभूतं किञ्चिदपि दृश्यते, ५०

**स्वप्नः**- यत्र देहकरणविषयाः मिथ्यैव भासन्ते, तादृशी सुप्तिः, ९

**स्वयंप्रकाशः**- अन्यनिरपेक्षश्चिद्रूप आत्मा, यत्प्रकाशेनैव सर्वमिदं विभाति, ७२

**स्वयंसिद्धानुभवः**- प्रमाणनिरपेक्षमेव सिद्धमात्मचैतन्यम्, ७०

———

*By The Author of "Vedanta Balabodhini"*

# BACK - TO - SHANKARA SERIES

[Works calculated to enable students of philosophy to determine the exact method of Shankara's Vedanta System]

**Isavasya Upanishad Bhasya** :- A Critical Edition of the Text with Commentary, Foot-notes, the Text in the Madhyandina Recension, Summary of the Upanishad, an Appendix discussing the Samuchchaya-Vada, Index and other aids. Rs. 0·50

**Vedanta Dindima** :- The Drum-beat of Vedanta by Sri Nrisimha Saraswati Thirtha. Sanscrit Text critically edited with an original Commentary. Rs. 0·63

**Sugama** :- A new Commentary on Sri Shankara's Introduction to his famous Sutra Bhashya. Clears out of the way all later undesirable accretions to genuine Vedanta. Rs· 1·50

**Mandukya Rahasya Vivriti** :- An Exhaustive Commentary on the Mandukya Upanishad and the Gaudapada Karikas thereon. The fundamental difference between the Advaita Vedanta and the Mahayana System, has been clearly brought out here. Rs. 12·00

## READY FOR THE PRESS

**Bhashyas on THE KENOPANISHAD, MUNDAKA UPANISHAD, and the TAITTIREEYA UPANISHAD with Notes etc.,**

*Apply for Details to* :

**THE ADHYATMA PRAKASHA KARYALAYA**

HOLENARSIPUR.

HASSAN DIST, MYSORE STATE, SOUTHERN RAILWAY·

# कतिचन वेदान्तग्रन्थाः

(शाङ्करवेदान्तप्रक्रियानिर्धारणे सहायकाः)

एतद्ग्रन्थकर्तृभिरेव प्रणीतटिप्पणादिसंवलिताः

१. **ईशावास्योपनिषच्छाङ्करभाष्यम्** – विषयविभागानुसारेण प्रविभक्तभाष्यशरीरम्, भाष्यान्तरसंवादादिटिप्पणयुतम्, जिज्ञासूपयोगिपरिशिष्टमन्त्रानुक्रमणिकाशब्दसूच्यादिसमेतं च ॥ **इदानींतनं मूल्यम्** रू. ०.५०

२. **वेदान्तडिण्डिमः** – श्रीमन्नृसिंहसरस्वतीतीर्थकृतः भावबोधिन्याख्यनवीनव्याख्यानसंयुतः, शोधितपाठश्च ॥ रू. ०.१३

३. **मूलाविद्यानिरासः** – "शङ्करहृदया"पराभिधानः । अद्वैतवेदान्तप्रक्रियातत्त्वविमर्शनपरो निबन्धः सप्रमाणवचनः । वेदान्तविद्भिरवश्यमवलोकनीयः ॥ रू. २.५०

४. **सुगमा** – अध्यासभाष्यस्य नवीनव्याख्या । अत्र भाष्यकारोक्त्युपजीवनेनैव शाङ्करवेदान्तप्रक्रिया वाचकहृदयङ्गमीकृता । शुद्धसंप्रदायविरुद्धा वादाश्च तत्र तत्र श्रुतियुक्त्यनुभवप्रातिकूल्यप्रकटनपूर्वकं निर्विशङ्कं निराकृताः ॥ रू. १.५०

५. **माण्डूक्यरहस्यविवृतिः** – माण्डूक्योपनिषद्व्याख्या गौडपादीयकारिकाव्याख्या च । अत्र माण्डूक्योपनिषदि गर्भीकृतानि नैकानि रहस्यानि श्रीगौडपादाभिमतप्रक्रियानुसारेणोद्घाटितानि । श्रीशङ्करभाष्योक्त्युपजीवनेनैव उपनिषदः कारिकाणां चार्थो भाष्यान्तरोक्तिसंगानेन व्याख्यान्तरदोषाविष्करणसहितं व्याकृताः । अर्वाचीनग्रन्थपुरातत्त्वशोधकोत्थापितमतान्तरसंक्रान्तिशङ्कानिरसनपूर्वकं गौडपादीयप्रक्रिया विशदीकृता च ॥ रू. १२.००

## अचिरादेव प्रचिकाशयिषितानि

**केनमुण्डकतैत्तिरीयादिभाष्याणां टिप्पणव्याख्यानादीनि ॥**

पुस्तकप्राप्तिस्थानम् :-

**अध्यात्मप्रकाशकार्यालयः, होळेनरसीपुरम्,**

(हासन जिला, मैसूरु संस्थानम्, दक्षिण रैल्वे.)

# MANDUKYA RAHASYA VIVRITI

## ( An open sesame to the Mandukya )

SOME OPINIONS

1. Very useful to the students of Adwaita Vedanta who follow the modern method as well as the ancient one. Swamiji's Commentary on the Karikas shows the depth of his knowledge in the subject, the clarity of his expression and his lucidity in style. —*The Sunday Standard*

2. This is not merely a Commentary on the Karikas of Gowdapada. The author covers a much wider ground, taking into account all relevent criticism and discusses threadbare the implications of the Advaita standpoint *Vis a vis* the other systems. —*The Vedanta Kesari*

3. The Introduction in English and the Bhumika in Sanskrit are both scholarly and valuable... The language is easy and forcible... This is a book that requires and deserves careful study. —*The Prabuddha Bharata*

4. It is an erudite and scholarly work explaining the Upanishad and Karika passages fully and thoroughly with appropriate headings, and often criticises views held by others... The language employed in the commentary is majestic and beautiful and one rarely comes across such writing nowadays. —*The Hindu*

THE
ADHYATMA PRAKASHA KARYALAYA
HOLENARSIPUR (Hassan Dist.)